**बकु०**—अपुव्वा[1] इअं दारिआ तुह[2] आसण्णा आलिहिदा किंणामहे अत्ति । ( क )

**कौमु०**—आकिदिविसेसेसु[3] आअरो पदं करेइ । तदो तदो । ( ख )

**बकु०**—तदो अवहीरिअवअणो भट्टा[4] संकिदो देवीं पुणोवि[5] अणुबन्धिदुं पउत्तो । तदो[6] कुमालीए वसुलच्छीए आचक्खिदम् । आवुत्त[7] एसा मालविएत्ति । ( ग )

**कौमु०**—( सस्मितम् । ) सरिसं क्खु बालभावस्स । तदो[8] वरं कहेहि । ( घ )

**बकु०**—किं अण्णं । संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि । ( च )

---

( क ) अपूर्वेयं दारिका तवासन्नालिखिता किंनामधेयेति ।

( ख ) आकृतिविशेषेष्वादरः पदं करोति । ततस्ततः ।

( ग ) ततोऽवधीरितवचनो भर्त्ता शङ्कितो देवीं पुनरप्यनुबन्द्धुं प्रवृतः । ततः कुमार्या वसुलक्ष्म्याख्यातम् । आउत्त एषा मालविकेति ।

( घ ) सदृशं खलु बालभावस्य । ततः परं कथय ।

( च ) किमन्यत् । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते ।

---

भर्त्रा दृष्टेत्युक्तिः प्रकृतकथाप्रसंगार्थः । अनेन च कथोद्घातेन तस्याः भर्तुश्च प्रवेशो भविष्यतीति प्राक्सूचितं । ' असूचितस्य प्रवेशो नास्ति । इति नाटकसंप्रदायात् तत्सूचनं ) । आमेत्यभ्युपगमे ( आमइत्यंगीकारे ) । स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः । ( प्रत्यग्रः वर्णस्य रागो यत्र चित्रलेखायां तादृशी ) । भर्ता चोपस्थितः । आसन्नदारिकां । अपूर्वेयं दारिका आसन्नाच देव्या आलिखिता किंनामधेयेति ॥

---

( १ ) A. अपूव्वरूवा ( २ ) B. G. T. देवीए आसण्णा N. आसण्णा अ देवीए ( ३ ) B. G. T. आकिदिविसेसे ( आकृतिविशेषे ). ( ४ ) N. P. om. ( ५ ) N. om. अवि and A. पुणो पुणो वि णिब्बधिदुं. ( ६ ) B. G. N. T. अज्ज. or अज्जउत्त P. N. add जाव देवी ण कहेदि दाव. ( ७ ) B. G. N. T. एवं ( ८ ) N. तदोवर and B. G. T. तदो अवरं.

**कौमु०**—हला अणुचिट्ठ अप्पणो णिओअं । अहं वि एदं अङ्गुली-अअं देवीए उवणइस्सम् । ( इति निष्क्रान्ता ) ( क )

**बकु०**–( परिक्रम्यावलोक्य च । ) एसो णट्टाआरिओ अज्जगणदासो[4] संगीदसालादो णिक्कमादि[5] । जाव से अत्ताणं दंसेमि । ( इति परिक्रामति । ) ( ख )

( प्रविश्य[6] )

**गणदासः**—कामं खलु सर्वस्य[7] कुलविद्या बहुमता । न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम् । कुतः[8] ।

**देवानामिदमामनन्ति मुनयः कान्तं[9] क्रतुं चाक्षुषं**

---

( क ) हला अनुतिष्ठ आत्मनो नियोगम् । अहमप्येतदङ्गुलीयकं देव्या उपनेष्यामि ।

( ख ) एष नाट्याचार्य आर्यगणदासः संगीतशालातो निष्क्रामति । यावदस्मायात्मानं दर्शयामि ।

---

( अवधीरितं देव्या प्रत्युत्तरादानेन अवज्ञातं वचनं यस्य अत एव शंकितः शंका मद्वचनश्रवणेऽपि कथं नोत्तरं दत्तमित्यत्र केनचित् कारणेन भवितव्यं नवेत्याकारकः संशयो जातो यस्य तारकादित्वात् इतच् । ) आर्य एष इत्यादि । ' अपुव्वा इअं दारिआ ' इत्यारभ्य ' दंसणपहादो रक्खीअदि ' इत्यन्तेन वाक्यकदम्बकेन गम्यमानो मालविकागोचरो राज्ञोऽभिलाषोऽत्र नाटके बीज-मित्यनुपस्थेयम् ॥ सखि आत्मनो नियोगमनुतिष्ठ । एष नाट्याचार्यः संगी-तशालातो निर्गच्छति । **देवानामित्यादि** । मुनयो भरतमतङ्गादय इदं नाट्यं

---

( १ ) B. G. T. N. अत्ताणो. (२) N. अत्ताणो णिओअं अणुचिट्ठ. (३) A. P. देवीए अंगुलिअअं &c. ( ४ ) B. G. N. T. om. ( ५ ) B. G. N. T. णिग्गच्छदि. ( ६ ) B. G. add गणदासः here. ( ७ ) B. G. N. T. add. अपि. ( ८ ) B. G. T. कुतः । तथाहि । N. तथाहि- ( ९ ) N. शान्तम.

**रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।**
**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते**
**नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥ ४ ॥**

---

देवानामिन्द्रादीनां क्रतुं यज्ञं (संकल्पं च) आमनन्ति । (एतद्दर्शने चक्षुषः प्रीतिकरी देवानामभीष्टयज्ञसंकल्पयोः प्राप्तिरित्यर्थः) कीदृशम् । कांतं (शान्तं) सौम्यम् । पशुविशसनादिरहितमित्यर्थः । पुनः कीदृशम् । चाक्षुषं चक्षुरनुभाव्यम् । ( तेन वास्तविकयज्ञादस्य विशेषः ) । अस्य नाट्यस्य क्रतुत्वनिरूपणं चतुर्वेदसारनाट्यवेदविहितकर्मत्वादिति मन्तव्यम् । तथा च कुमारसंभवे–' कर्म यज्ञः फलं स्वर्गः ' इति । अत्र चतुर्वेदसारत्वं भारतीये प्रतिपादितम्–' सर्वशास्त्रार्थसंपन्नं सर्वशिल्पप्रदर्शनम् । नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥ एवं संकल्प्य भगवान्सर्वान्वेदाननुस्मरन् । नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥ जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च । यजुर्वेदादभिनयान्रसानाथर्वणादपि ॥ वेदोपवेदसंबद्धो नाट्यवेदो महात्मना । एवं भगवता सृष्टो ब्रह्मणा ललितात्मना ॥ उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम् ॥ इति ' प्रकारान्तरेणाप्यस्य क्रतुत्वं प्रतिपादितम–' प्रयोगं यश्च कुर्वीत प्रेक्षते चावधानवान् ॥ यागतिर्वेदविदुषां या गतिर्यज्ञयाजिनाम् । या गतिर्दानशीलानां तां गतिं प्राप्नुयान्नरः ॥ ' इति । पुनः कीदृशमिदं नाट्यम् । रुद्रेणेश्वरेणोमाकृतव्यतिकरे उमया पार्वत्या कृतो व्यतिकरः संबन्धो यस्य स तथोक्तस्तस्मिन्स्वाङ्गे आत्मदेहे द्विधा द्विप्रकारेण लास्यताण्डवरूपेण विभक्तं पृथक्कृतम् । ( स्त्रीपुंसयोर्नृत्ययोर्भेदात् हररूपार्धांगेन पुंनर्तनं गौरीरूपार्धांगेन च स्त्रीनिर्तनंकृतमित्यर्थः ) तथा चोक्तं संगीतविद्याविनोदे–' उद्दण्डताण्डवमुदञ्चितलास्यलीलां कर्तुं स्वयं युगपदेव समुत्सुकात्मा । यःकामिनी कलितकम्रतरार्धकायः सोऽयं विभाति विभुरादिनटः सुराणाम् ॥ ' अत्र नाट्ये त्रैगुण्योद्भवं । त्रयो गुणाः सत्वरजस्तमांस्येव त्रैगुण्यम् । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । तस्मादुद्भवमुद्भूतं लोकचरितं लोकानां लोकस्थानां ( प्रशस्यानां ) रामाद्यनुकार्याणां चरितं ( चेष्टितं ) सुखदुःख-

---

( १ ) स्वांगैः ( २ ) N. समाराधकम्.

**बकु०**—( उपगम्य । ) अज्ज वन्दामि । ( क )

**गण०**—भद्रे चिरं जीव ।

**बकु०**—अज्ज देवी पुच्छादि । अवि उवदेसग्गहणे णादिकिलिस्सादि वो सिस्सा मालविएत्ति । ( ख )

**गण०**—विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति । किं बहुना ।

**यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।**

---

( क ) आर्य वन्दे ।

( ख ) आर्य देवी पृच्छति । अप्युपदेशग्रहणे नातिक्लिश्यति वः शिष्या मालविकेति ।

---

मिश्रात्मकं चरित्रं नानारसं नाना बहुविधा रसाः प्रीतयो यस्मात्तथोक्तम् । दृश्यते ज्ञायते । सामाजिकैरनुभूयत इत्यर्थः । लोकानुकार्यस्य चरितं सुखदुःखमिश्रात्मकमपि नाट्येनाभिनीयमानं सत्सुखरूपेणैव प्रतीयत इति भावः । पुनः कीदृशम् । नाट्यं नटनप्रयोगः । एकमप्येकैकमपि भिन्नरुचेर्भिन्ना बहुविधा रुचयः प्रीतयोयस्य स तथोक्तस्तस्य जनस्य बहुधा बहुप्रकारेण शृङ्गारहास्यादिरूपेण समाराधनं संतर्पकम् । तथा चोक्तं भारतीये—त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ॥ धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् । अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥ नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् । लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥एतद्रसेषु भावेषु सर्वकर्मक्रियासु च । सर्वोपदेशजननं नाट्यमेतद्भविष्यति ॥ न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला । नासौ योगो न तत्कर्म नाट्येऽस्मिन्यन्न दृश्यते ॥ ॥ इति ॥ **यद्यदित्यादि** ॥ प्रयोगविषयेऽभिनयार्थे मया तस्यै मालविकायै यद्यद्भाविकं भाववत् ( शृंगाराद्यवस्थाविशेषाय हितंठक् ) । 'अतइनिठनौ । इति ठन् । नृत्यमित्यर्थः ।

---

( १ ) B. G. N. T. उपेत्य. ( २ ) B. G. T. अज्जं ( आर्यं ). ( २ ) N. क्लिश्नाति, P. क्लेशयति, B. G. क्लिश्यते. ( ३ ) B. G. N. T. add भद्रे. ( ४ ) P. विभाव्यतां.

**तत्तद्विशेषकरणात्प्रत्युपदिशतीव मे बाला ॥ ५ ॥**

**बकु०**—( आत्मगतम् ) अदिक्कमन्तिं[1] विअ इरावदिं पेक्खामि[2] । ( प्रकाशम् । ) किदत्था दाणिं वो सिस्सा जस्सिं[3] गुरुअणो एवं तुस्सदि । ( क )

**गण०**—भद्रे तद्विधानामसुलभत्वात्पृच्छामि । कुतो देव्यास्तत्पात्र[4]मानीतम् ।

**बकु०**—अत्थि देवीए वण्णावरो भादा वीरसेणो णाम । सो[5] भट्टिणा अन्तपालदुग्गे मन्दाइणीतीरे ट्ठाविदो[6] । तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति[7] भइणीएँ[8] उवाअणं पेसिदा । ( ख )

( क ) अतिक्रामन्तीमिवेरावतीं प्रेक्षे । कृतार्थेदानीं वः शिष्या यस्यां गुरुजन एवं तुष्यति ।

(ख) अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम भर्त्रान्तपालदुर्गे मंदाकिनीतीरे स्थापितः । तेन शिल्पाधिकारे योग्येयं दारिकेति भगिन्योपायनं प्रेषिता ।

यथोक्तं—' आङ्गिकाभिनयप्रायमल्पवाचि ससात्विकम् । भावानामास्पदं नित्यं पदार्थव्यञ्जनात्मकम् ।।इति।। उपदिश्यते । बोध्यते । तत्तद्विशेषकरणात्तस्य तस्य भाविकस्य विशेषेणातिशयेन करणं निर्वर्तनं तस्मात्सा बाला (बाल्यावस्थापन्नापि वयसा) मे प्रत्युपदिशतीव । अनेन तस्या नृत्ये प्राविण्यातिशयो गम्यते ।। (यो हि विशेषज्ञः स शिक्षकः इतिसंप्रदायात् ) । अतिक्रान्तामिवेरावतीम् पश्यामि (इरावती अप्सरो विशेषः) । (वर्णतोऽवरः तत्पितुः वैश्यागर्भजातत्वात् तस्यावरत्वम् ) वीरसेनो नाम भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः।

( १ ) N. अदिक्कंतं ( अतिक्रांतां ). ( २ ) N. पेच्छामि ( पश्यामि ). ( ३ ) N. जाए ( यस्यां ) ( ४ ) B. G. N. T. देव्या तत्. ( ५ ) N. om. ( ६ ) B. G. T. अन्तवालदुग्गे णम्मदातीरे. N. णम्मदातीरे अन्तवालदुग्गे. णम्मदाकूले. P. मंदाइणीदीरे. ( ७ ) N. add भणिअ. ( ८ ) B. G. T. बहिणीए ( N. भइणीए ) देवीए.

**गण॰**—( आत्मगतम् । ) आकृतिविनयप्रत्ययादेनामनूनवस्तुकां संभावयामि । ( प्रकाशम् । ) मयो भद्रे यशस्विना भवितव्यम् । यतः ।

**पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।**

**जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ६ ॥**

**बकु॰**—अह कहिं वो सिस्सा । ( क )

**गण॰**—इदानीमेव पञ्चाङ्गाभिनयमुपदिश्य विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति ।

**बकु॰**—तेण हिं अणुजाणादु मं अज्जो । जाव से अज्जपरितोसणिवेदणेण उच्छाहं वड्ढेमि । ( ख )

---

(क) अथ कुत्र वः शिष्या ।

(ख) तेन ह्यनुजानातु मामार्यः । यावदस्या आर्यपरितोषनिवेदनेनोत्साहं वर्धयामि ।

---

तेन शिल्पाधिकारे कलाविद्याधिगम इयं योग्या दारिकेति भणित्वा भगिन्या देव्या उपायनं प्रेषिता ॥ अनूनवस्तुकामनूनमनल्पं विशिष्टं वस्तु वृत्तं यस्याः सा तथोक्ता तां संभावयामि मन्ये । **पात्रविशेष इत्यादि ।** आधातुरुपदेष्टुः शिल्पं कलाविद्या पात्रविशेषे विशिष्टपात्रे न्यस्तं निहितं सत् गुणान्तरं गुणविशेषं व्रजति प्राप्नोति । अत्रोपमामाह—पयोदस्य मेघस्य जलं समुद्रशुक्तौ न्यस्तं सत् मुक्ताफलतां मौक्तिकत्वमिव ॥ अथ किम् । अथ कुत्र वः शिष्या ॥ **इदानीमित्यादि ।** पञ्चाङ्गाभिनयं पञ्च अङ्गानि यस्य तत्तथोक्तम् । प्रेरणामित्यर्थः । तस्याभिनयः प्रयोगस्तमिदानीमिदैवोपदिश्य

---

(१) B. G. N. T. आकृतिविशेषप्रत्ययात्. P. आकृतिप्रत्ययात्. (२) B. G. N. T. भद्रे मयापि. (३) पात्रविशेषन्यस्तं. (४) B. G. T. अज्ज. for अह and N. add अह इ. (५) B. G. T. दाणिं. (६) B. G. T. पंचांगादिकमभिनयं. पंचांगमभिनयं. (७) B. G. N. T. add मया. (८) अग्रपातं पुरोवातं. (९) N. add पुणो. (१०) N. अज्जस्स परितोस. &c.

**गण०**—दृश्यतां सखी । अहमपि लब्धक्षणः स्वगृहं गच्छामि ।

( इतिनिष्क्रान्तौ । )

[1]मिश्रविष्कम्भकः ।

( ततः प्रविशत्येकान्तस्थ[2]परिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा । )

**राजा**—( अनुवाचितलेखममात्यं विलोक्य । ) वाहतव[3] किं प्रतिप[4]-द्यते वैदर्भः ।

**अमात्यः**—[5]आत्मविनाशम् ।

**राजा**—[6]संदेशमिदानीं श्रोतु[7]मिच्छामि ।

---

शिक्षयित्वा । प्रवातं प्रशस्तो वातो यस्मिन्देशे स तथोक्तस्तम् । प्रेरणस्याङ्गपञ्चकमुक्तं संगीतरत्नाकरे-' नृत्तं तथा च कैवारो मर्मरो जागरं (वागडं) तथा । गीतं चेति समाख्यातं प्रेरणस्याङ्गपञ्चकम् ॥ त्रिभिस्त्वेतत्प्रयोज्यं स्यात्कैवारं जागरं विना । ( चित्ताक्षिभ्रूहस्तपादैरंगैश्चेष्टादिसाम्यतः । पात्राद्यवस्थाकरणं पञ्चांगोऽभिनयो मतः ॥ इत्युक्तपञ्चागकं आदिपदेन ' भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आंगिको वाचिकश्चैवमाहार्यः सात्विकस्तथा ' इत्युक्तचतुरंगकं । अभिनयं पात्रादेः चित्तादिभिः साम्यकरणं । प्रकृष्टो वातस्तमासेवमाना भजमाना । ) इति । अत्र पञ्चाङ्गरूपनृत्तान्तरोपक्रमकथनेन चलितकनृत्तं साकल्येन परिचितमिति सूच्यते । तेन हि पुनरनुजानातु मामार्यः । यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि । लब्धक्षणो लब्धः प्राप्तः क्षणो निर्व्यापारस्थितिर्विश्रमो येन स तथोक्तः स्वगृहमात्मगृहं गच्छामि । **मिश्रविष्कम्भकः** ॥ **ततः प्रविशतीत्यादि** । ( अन्वास्यमानः पश्चादुपवेशनेन सेव्यमानः । अन्वासितमरुंधत्योति वत् अनुपूर्वकासतेः सकर्ममकत्वम् । ) वाहतवेति तस्यामात्यस्य संज्ञा । वैदर्भो विदर्भराजः किं प्रतिपद्यते किं कार्यं मन्यते ॥ संदेशं संदिष्टार्थं श्रोतुमिच्छामि ॥ अनेन वैदर्भेणेदं प्रतिलिखितं प्रत्युत्त-

---

( १ ) B. G. N. T. A. विष्कंभः ( २ ) B. G. N. T. स्थित°. ( ३ ) वाहतक. ( ४ ) B. G. T. वाहतक. ( ५ ) B. G. N. T. add देव. ( ६ ) T. निदेशं, B. G. निर्देशं. ( ७ ) B. G. T. ज्ञातुं.

**अमात्यः**—इदमिदानीमनेन प्रतिलिखितम् । पूज्येनाहमादिष्टः । पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपागच्छेन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः । स त्वया मदपेक्षया सकलत्रसोदर्यो मोचयितव्य इति । तन्न वो न विदितम् यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा । तदन्वेषणाय प्रयतिष्ये । अथावश्यमेव माधवसेनो पूज्येन मोचयितव्यः श्रूयतामभिसंधिः ।

---

रत्वेनाभिलिखितम् । पूज्येन पूजार्हेण त्वया । अग्निमित्रेणेत्यर्थः । अहं वैदर्भ आदिष्ट आज्ञप्तः । तमेवादेशं विवृणोति—**भवत इत्यादिना** भवतस्तव ( वैदर्भस्य ) पितृव्यपुत्रः पितृभ्रातृसुतो माधवसेनो-नाम प्रतिश्रुतसंबन्धः प्रतिश्रुतोऽङ्गीकृतः संबन्धः कन्यकाप्रदानरूपो येन स तथोक्तः । ममोपान्तिकं मत्समीपं ( अग्निमित्रस्य समीपं ) उपसर्पन्नुप गच्छन्नागच्छन्नन्तरा मध्ये त्वदीयेन त्वत्संबन्धिना ( वैदर्भसंबन्धिना ) अन्तपालेन ( अन्तस्य पर्यन्तस्य पालेन रक्षकेण ) सीमादुर्गरक्षकेणावस्कन्द्य पथि प्रहृत्य गृहीतो निरुद्धः ( अवरुध्य निगृहीतः ) । बन्दीकृत इत्यर्थः । स माधवसेनस्त्वया भवता वैदर्भेण मदपेक्षया ( अग्निमित्रे ) मय्यपेक्षा इच्छा । स्नेह इत्यर्थः । तया हेतुना । सकलत्रसोदर्यो भार्याभगिनीसहितः । 'वोपसर्जनस्य' इतिसहशब्दस्य सादेशः । मोक्तव्यो विसर्जनीयः । इति समाप्ती । एतावता वैदर्भेणाग्निमित्रप्रेषितपत्रिकार्थानुवादः कृत इत्यनुसंधेयम् । इतः परं प्रत्युत्तररूपं वैदर्भवचनमुच्यते—**एतन्ननु वो विदितमित्यादि** । एतद्वक्ष्यमाणं वो युष्माकं विदितं नन्वित्यत्र काकुरनुसंधेया । तुल्याभिजनेषु समानवंशेषु । ज्ञातिष्वित्यर्थः । ( तथा च माधवसेनः अस्माकमेकान्वयजः तत्र ज्ञातिभिःसह वैरं विशेषतो नृपाणां भवत्येव ।

---

( १ ) प्रतिलेखित. ( २ ) B. G. N. T. उपसर्पन्. ( ३ ) N. मोक्तव्यः ( ४ ) B. G. T. तत्र वो न विदितं, N. एतन्न नु वो विदितं P. तन्नवो विदितं. ( ५ ) A. भूमिभरेषु. P. भूमेरिव N. om. ( ६ ) P. प्रवृत्तिः ( ७ ) A. P. om. ( ८ ) B. G. सोदरी; T. सोदरा. ( ९ ) B. G. T. यतिष्ये. ( १० ) B. G. N. अथवा अवश्यं. ( ११ ) B. G. N. T. add मया. ( १२ ) add मम.

**[1]मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम् ।**
**मोक्ता माधवसेनं ततो ऽहमपि बन्धनात्सद्यः ॥ ७ ॥ [2]इति ।**

**राजा**—( [3]सरोषम् ) कथं । कार्यविनिमयेन मयि [4]व्यवहरत्यनात्मज्ञः । वाहतव प्रकृत्यामित्रः प्रतिकूल[5]चारी च मे वैदर्भः । तद्यातव्यपक्षे स्थितस्य पूर्वसंकल्पितमु[6]न्मूलनाय वीरसेन[7]प्रमुखं दण्डचक्रमाज्ञापय ।

**अमात्यः**—यदाज्ञापयति देवः ।

**राजा**—अथवा किं भवान्मन्यते ।

**अमात्यः**—शास्त्रदृष्टमाह देवः । [8]कुतः ।

---

अतः कारणादस्मिन् विषये पूज्योऽग्निमित्रो भवान् मध्यस्थः मध्ये उभयपक्षसाहाय्यस्याभावे स्थितः । ) राज्ञां वृत्तिर्वर्तनमीदृश्येवंविधेति यत्तन्ननु वो विदितमिति संबन्धः । अतोऽस्मात्कारणादतास्मिन्नर्थे पूज्यो भवान्मध्यस्थः समो भवितुमर्हति । अस्य माधवसेनस्य सोदर्या पुनः स्वसा पुनर्ग्रहणविप्लवे विनष्टा तिरोहिता । ( सोदरेत्युक्तिः प्रकृतकथोपयोगिनी तच्चाग्रेस्पष्टं भविष्यति । ) तदन्वेषणाय तस्या अन्वेषणाय गवेषणाय प्रयतिष्ये । अथ वेति पक्षान्तरे । ( माध्यस्थ्यं विहाय माधवसेनपक्षपातित्वं कर्तव्यं चेत् तत्राह । अथेति । अथ माध्यस्थ्यं विहाय माधवसेनपक्षपातित्वे मया वैदर्भेण हेतुकर्त्रा पूज्येन मान्येन भवता अग्निमित्रेण प्रयोजककर्ता माधवसेनोऽवश्यं मोचनयिस्तदा अयमभिसंधिः अभिमुखः पणः उद्देशो वा । ) मोचयितव्यो त्याजयितव्यः । अभिसंधिर्निश्चयः । **मौर्यसचिवमित्यादि ।** पूज्यो भवान्संयतं त्वया निगलितं मम श्यालं पत्नीभ्रातरं मौर्यसचिवं मौर्यसचिवनामानं विमुञ्चति यदि त्यजति चेत् ततस्तस्मात्कारणान्मया सद्यः सपदि माधवसेनो बन्धनात् ( निर्गलात् ) मोक्ता मुक्तो भविता । मुञ्चते कर्मणि लुट् ।

---

( १ ) B. G. T. आर्यसंचिवं मुंचति. ( २ ) N. मोक्तामाधवसेनस्ततो मया &c. ( ३ ) B. G. N. T. om. ( ४ ) P. om. सरोषम्. ( ५ ) B. व्याहरति. ( ६ ) B. G. T. वाहतक. ( ७ ) B. G. N. T. प्रतिकूलकारी. ( ८ ) om. ( ९ ) N. समुन्मूलनाय. ( १० ) N. वीरसेनमुखं. ( ११ ) B. G. N. T. om.

**अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।**
**नवसंरोहणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ८ ॥**

**राजा**—तेन ह्यवितथं तन्त्रकारवचनम् । इदमेव निमित्तमादाय समुद्योज्यतां सेनापतिः ।

**अमात्यः**—तथा । ( इति निष्क्रान्तः । )

( परिजनो यथाव्यापारं राजानमभितः स्थितः )

( प्रविश्य । )

**विदूषकः**—आणत्तोह्मि तत्तहोदा रण्णा । गोत्तम चिन्तेहि दाव उवाअं । जह मे जदिच्छादिट्ठपडिकिदी मालविआ पच्चक्खदंसणा होदित्ति । मए वि तत्तहा किदं । जाव से णिवेदेमि । ( इति परिक्रामति । ) (क)

**राजा**—( विदूषकं दृष्ट्वा । ) अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ।

---

( क ) आज्ञप्तोऽस्मि तत्र भवता राज्ञा । गौतम चिन्तय तावदुपायम् । यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मयापि तत्तथा कृतम् । यावदस्मै निवेदयामि ।

---

(मोक्तेति शीलार्थतृणंतत्वान्न तद्योगे कर्मणि षष्ठी ।) इति लिखितार्थसमासौ । प्रकृत्यमित्रः स्वभावतः शत्रुः । अत्र प्रकृत्यमित्रत्वं च विषयानन्तरत्वादिति मन्तव्यम् ॥ ( यातव्यपक्षेयुद्धार्थमभियास्यमानपक्षे शत्रुपक्षे इति यावत् । दंड्यतेऽरिरेभिर्दंडाः सैन्यानि तेषां चक्रं समुदायं । ) **अचिराधिष्ठितेत्यादि** । ( प्रकृतिषु प्रजादिषु अचिराधिष्ठितराज्यः अचिरप्राप्तयधिकारोऽरूढमूलत्वाददृढमूलत्वान्नवसंरोपणशिथिलः नवाधिरोहणेन शिथिलः श्लथमूलः समुद्धर्तुमुत्पाटयितुं नाशयितुं च सुकरः ।) तेनारूढमूलत्वेन हेतुना । तन्त्रकारवचनमर्थशास्त्रकारवचनमवितथं हि सत्यमेव । भविष्यतीति शेषः ।

---

( १ ) B. G. N. T. संरोपण°. ( २ ) N. add वचनं. ( ३ ) N. उपादाय. ( ४ ) N. सेनाधिपतिः ( ५ ) P. the bracket after विदूषकः ( ६ ) B. G. T. add विदूषकः ( ७ ) B. G. N. T. अ.

**विदूषकः**—( उपसृत्य । ) वड्ढदु भवं । ( क )

**राजा**—( सशिरःकम्पम् । ) इत आस्यताम् ।

( विदूषक उपविष्टः । )

**राजा**—कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ।

**विदूषकः**—पओअसिद्धिं पुच्छ । ( ख )

**राजा**—कथमिव ।

**विदूषकः**—( कर्णे । ) एव्वं विअ । ( ग )

---

( क ) वर्धतां भवान् ।

( ख ) प्रयोगसिद्धिं पृच्छ ।

( ग ) एवमिव ।

---

हिशब्दोऽवधारणे । 'हि हेतावधारणे' इत्यमरः । इदमेव वैदर्भस्य कार्यविनिमयरूपमेव वचनं वाक्यं निमित्तं हेतुमुपादायावलम्ब्य समुद्योज्यतां प्रवर्त्यताम् ॥ मयाच तत्तथा कृतम् । अत गम्यमानं राज्ञो मालविकादर्शनौत्सुक्यमारम्भो नाम प्रथमावस्थेति मन्तव्यम् । अत्र बीजारम्भयोः समन्वयान्मुखसंधिरित्यनुसंधेयम् । उपेयोपायदर्शने उपेयस्य साध्यस्य मालविकासाक्षाद्दर्शनस्योपायदर्शने साधनज्ञाने ते प्रज्ञाचक्षुः प्रतिभादृष्टिः किंचिदीषदपि व्यापृतं प्रसृतम् । अपि प्रश्ने । ( उपायेन हेतुविशेषेण उपेयस्य प्राप्यस्य प्रकरणादिह दृश्यस्येत्यर्थाद्दर्शने साक्षात्करणे दृश्येर्ण्यन्तात् ल्युट् । निमित्तार्थे सप्तमि । दर्शनायेत्यर्थः । ते तव प्रज्ञैव चक्षुः पदार्थपरिच्छेदकत्वात् बुद्धिनेत्रं व्यापृतं स्वविषयग्रहणाय समर्थं कच्चित् । मालविकाया मह्यंदर्शनाय उपायं किंचिच्चिन्तितवानित्यर्थः) । अत्रगम्यमानस्य मालविकारूपस्य बीजस्य विन्यासादुपक्षेपो नाम संध्यङ्गमुक्तं भवति ॥ ( प्रयुज्यतेऽस्मै इति प्रयोगः तस्य मालविकादर्शनरूपस्य सिद्धिं पृच्छ किमुपायचिंतनपृच्छयेति भावः ) । कर्णे । एवमिव । एतद्वचनं नियतस्य व्यापारान्तरभेद्यस्य गुह्यतरार्थस्य

---

( १ ) B. G. N. T. उपगम्य. ( २ ) N. अपि किंचिदुपेयोपाय &c. and B. G. T. कच्चिदुपायोपेय &c. ( ३ ) P. add आ; आः ( ४ ) B. G. T. add ( इत्यावेदयति । )

**राजा**—साधुं वयस्य निपुणमुपक्रान्तं। इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे। कुतः।

**अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव।**
**दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ९ ॥**

( नेपथ्ये। )

अलमलं बहु विकथ्य। राज्ञः समक्षमेवावयोरधरोत्तरव्यक्तिर्भविष्यति।

**राजा**—सखे त्वन्नीतिपादपस्य पुष्पमुद्भिन्नम्।

**विदू०**—फलं वि अइरेण देक्खिस्ससि। ( क )

( ततः प्रविशति कञ्चुकी। )

---

( क ) फलमप्यचिरेण द्रक्ष्यसि।

---

प्रयोगे कविना प्रयुक्तम्। तथोक्तम्—' कर्णे एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्प्रसङ्गतः ' इति ॥ ( नाट्याचार्येण गणदासेन हरदत्तस्य विवादमुत्थाप्य शिष्य प्रयोगदर्शनात् तन्निर्णयेऽवधृते गणदासेन स्वशिष्यया मालविकया अभिनयकरणसमये तस्याः प्रत्यक्षदर्शनं भविष्यति। तच्चानुपदं दर्शयिष्यते। ) **इदानीमित्यादि**। अस्मिन्नारम्भे मालविकासाक्षाद्दर्शनोद्योगे दुरधिगमसिद्धावपि दुर्लभसिद्धौ सत्यपीदानीं त्वद्वचनश्रवणानन्तरं वयमाशंसामहे सिद्धिमपेक्षामहे ॥ **अर्थमित्यादि**। सप्रतिबन्धं सप्रतिरोधमर्थं ( बाधकबाध्यं ) प्रयोजनमधिगन्तुं लब्धुं सहायवानेव जनः प्रभुः समर्थो भवति। ( व्यतिरेकेण सहकारिसम्पन्नस्य कार्यहेतुत्वं समर्थयितुमाह। **दृश्यमित्यादि**। सचक्षुरपि चक्षुष्मानपि अनेन दृष्टिकारणसम्पत्तिर्दर्शिता। दीपेन

---

( १ ) om साधु. ( २ ) A. om and B. G. read with उपक्रांतं. ( ३ ) B. G. T. सप्रतिबंधं कार्यं. ( ४ ) om. अलं. ( ५ ) A. विकत्थनेन. ( ६ ) B. G. N. T. अधरोत्तरयोः. ( ७ ) B. G. N. T. add ( आकर्ण्य ). ( ८ ) B. G. N. T. सुनीति &c. ( ९ ) B. G. T. add इदं. ( १० ) B. G. T. P. A. om. ( ११ ) A. कांचुकेयः all through.

**कञ्चुकी**—देव अमात्यो विज्ञापयति । अनुष्ठिता प्रभोराज्ञा । एतौ पुनर्हरदत्तगणदासौ ।

**उभावभिनयाचार्यौ परस्परजयोद्यतौ ।**
**त्वां द्रष्टुमिच्छतः साक्षाद्भावाविव शरीरिणौ ॥ १० ॥**

**राजा**—प्रवेशय तौ ।

**कञ्चुकी**—यदाज्ञापयति देवः ( इति निष्क्रम्य पुनस्ताभ्यां सह प्रविष्टः । ) इत इतो भवन्तौ ।

**हरदत्तः**—( राजानं विलोक्य । ) अहो दुरासदो राजमहिमा । तथाहि ।

**न च न परिचितो न चाप्यगम्य-**
**श्चकितमुपैमि तथापि पार्श्वमस्य ।**
**सलिलनिधिरिव प्रतिक्षणं मे**
**भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥**

---

आलोकहेतुपदार्थेन विना तमसि अन्धकारे अनेन दृष्टिप्रतिबन्धो दर्शितः । स्थितमितिशेषः । दृश्यं द्रष्टुं योग्यं उद्भूतरूपवत् वस्तु द्रव्यं न पश्यति । दर्शने च आलोकवान् दीपादिः सहकारी ' गृह्णाति चक्षुसंबंधादालोकोद्भूतरूपयोः ' इत्युक्तेः । ) इदानीं इत्यादिना सहायवानेव इत्यन्तेन तस्य बीजस्य बहुलीकरणात्परिकर इति सन्ध्यङ्गमुक्तं भवति । **नेपथ्य इत्यादि** । ( नटानां पात्रवेषपरिग्रहादानं नेपथ्यं ) बहुविकथ्यात्मश्लाघां कृत्वालम् । ( तत्साध्यंनास्तीत्यर्थः । निषेधार्थकालं शब्दयोगे ल्यप् ) अलमिति प्रतिषेधे । ' अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ' इति क्त्वाप्रत्ययः अत्र बीजस्यदृढीकरणात् परिन्यासो नाम सन्ध्यङ्गमुक्तं भवति । **उभावित्यादि** । शरीरिणौ मूर्तौ साक्षाद्भावौ प्रत्यक्षभावाविव नृत्याभिनयार्थाविव । **न च न परिचित इत्यादि** । अयं राजा परिचितः संस्तुतश्च न भवतीति न

---

( १ ) B. G. N. T. add इति. ( २ ) B. G. N. T. जयैषिणौ. ( ३ ) B. G. N. T. उद्यतौ. ( ४ ) विवादिनौ. ( ५ ) N. om. ( ६ ) B. G. N. T. om. ( ७ ) B. G. N. T. गणदासः ( ८ ) P. अवलोक्य. ( ९ ) B. G. N. T. om. ( १० ) P. अगम्यः (११) जल°.

**गणदासः**—महत्खलु पुरुषाकारमिदं ज्योतिः। तथा हि।

> **द्वारे नियुक्तपुरुषानुमतप्रवेशः**
> **सिंहासनान्तिकचरेण सहोपसर्पन्।**
> **तेजोभिरस्य विनिवर्तितदृष्टिपातै-**
> **र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥**

**कञ्चुकी**—एष देवः। उपसर्पतां भवन्तौ।

**उभौ**—( उपेत्य। ) विजयतां देवः।

**राजा**—स्वागतं भवद्भ्याम्। ( परिजनं विलोक्य। ) आसने तावदत्रभवतोः।

( उभौ परिजनोपनीतयोरासनयोरुपविष्टौ। )

**राजा**—किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम्।

---

किं तु परिचित एव। ( परिचितत्वाच्च न भयहेतुरित्यर्थात्। ) अरम्योऽसौम्यश्च न किंतु रम्य एव। ( तेनापि न भयहेतुः। अत्रभयहेतोरभावेऽपि भयवर्णनात् विभावनालंकारः। न केवलं भयहेतुत्वमपि तु आश्चर्यत्वमपीत्याह। **स एवेति**। स दृष्टचरोएव अयं प्रत्यक्ष दृश्यो राजा सलिलनिधिरिव प्रतिक्षणमक्ष्णोर्नेत्रयोर्विषये दर्शने इत्यर्थः। नवो नवः नव प्रकारः प्रकारे द्विवचनं भवति। ) तथापि चकितं सभयं यथा भवति तथास्य पार्श्वं समीपमुपैमि। शेषं स्पष्टं ॥ **द्वारेनियुक्तेत्यादि**। ( द्वारे नियुक्तपुरुषेण दौवारिकेण नित्यापेक्षतयाऽसमस्तविशेषणत्वेऽपि समासः। अनुमतः अभ्युपगतः प्रवेशो यस्य अनिवारित इत्यर्थः। सिंहासनान्तिकचरेण राजसन्निहितपरिचारकेण कञ्चुकिनासह अनेनाभयत्वं प्रीतिभाजनत्वं चोक्तम्। उपसर्पन्नन्तिकं गच्छन्। विनिवर्तितः दुःसहत्वात् निवारितः स्वस्मिन् दृष्टिपातो नेत्रविक्षेपो यैस्तादृशैर्दुर्दर्शैरित्यर्थः। अस्य राजतेजोभिः शरीरकां-

---

( १ ) P. A. पुरुषाधिकारं; ( पुरुषाधिकरण ). ( २ ) B. G. N. T. अभिमत°.

**गण०**—देव श्रूयताम् । मया तीर्थादभिनयविद्या शिक्षिता । दत्त प्रयोगोऽस्मि । देवेन देव्या च परिगृहीतः ।

**राजा**—दृढं जाने ।

**गण०**—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षं नायं मे पादरजसा तुल्य इत्यधिक्षिप्तः ।

**हर०**—देव अयमेव मयि प्रथमं परिवादरतः । अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति । तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकश्च ।

**विदूषकः**—समत्थं पइण्णादं । ( क )

**गण०**—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

**राजा**—तिष्ठतु तावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डित कौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।

---

( क ) समर्थं प्रतिज्ञातं ।

---

तिभिः प्रभाविर्वा । पुनरपि प्रतिवारितो निवारितोऽस्मि । ) विनिवर्तितदृष्टि पातैर्विनिवारितदृष्टिप्रसारैरस्य राज्ञस्तेजोभिः पुनः प्रकाशविशेषैस्तु वाक्यादृते प्रतिषेधवाक्यं विना प्रतिवारित इव निरुद्ध इवास्मि ॥ सुष्ठु सुखेन आगतं आगमनं भवद्भ्याम् भवतोरित्यर्थः । क्रियययामभिप्रैतीति सम्प्रदानता । ) **तीर्थादभिनयविद्येत्यादि** । तीर्थाद्विशिष्टाद्गुरोरभिनयविद्या नाट्यविद्या

---

( १ ) N. om. ( २ ) B. G. T. सुतीर्थात्. ( ३ ) B. G. T. सुशिक्षिता. ( ४ ) B. G. N. दत्तप्रयोगश्चास्मि, T. दत्तप्रयोगश्चास्मि देवेन । देव्या &c. ( ५ ) T. N. बाढं. ( ६ ) B. G. N. T. add ततः किम्. ( ७ ) B. G. N. T. अयं मे न &c. ( ८ ) B. G. N. T. add अपि. ( ९ ) B. G. N. T. om. ( १० ) B. G. N. T. परिवादकर. ( ११ ) P. अस्तीति and A. om. इति. ( १२ ) A. विमर्शयतु. ( १३ ) B. G. N. T. om च. ( १४ ) B. G. T. तिष्ठ तावत् &c. N. तिष्ठ यावत्. ( १५ ) B. G. N. T. अस्याः. ( १६ ) P. A. कौशिक्यासहितायाः

**विदू०**- सुट्ठु भवं भणादि । ( क )

**आचार्यौ**— यद्देवाय रोचते ।

**राजा**—मौद्गल्य अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य [1]परिव्राजिकया देव्या च सह पुनः प्रविश्य । ) इत इतो देवी [2] धारिणी ।

**देवी**—( परिव्राजिकां विलोक्य । ) भअवदि हरदत्तस्स गणदासस्स अ संरम्भे कहं पेक्खसि । ( ख )

**परिव्राजिका**—अलं स्वपक्षावसादशङ्कया । न [3]परिहीयते प्रतिद्वन्द्विनो गणदासः ।

---

( क ) सुष्ठु भवान्भणति ।

( ख ) भगवति हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि ।

---

शिक्षिताभ्यस्ता ( सुतीर्थात् सुन्दरस्थानात् विशिष्टाध्यापकात् । आख्यातोपयोगे इत्यपादानता । देवेन दत्तप्रयोगः प्रयोगाधिकारः नाट्याभिनयाधिकार इति यावत् यस्मै तादृशः देव्या च परिगृहीतः आत्मपक्षीयत्वेनाभ्युपगतः । ) दत्तप्रयोगश्चास्मि । दत्तः शिष्येभ्यः प्रतिपादितः प्रयोगो विनियोगो येन स तथोक्तः ॥ ( प्रश्नं वादप्रतिवादिनौ प्रति विवादानुगत विषयपृच्छां करोति ठक् । विवादनिर्णायकः । ) प्रथमः कल्पो मुख्यः पक्षः ॥ न्याय्यो युक्तः । व्यवहारो विवादः ॥ ( वादिप्रतिवादिनोः प्रतिज्ञोत्तरादिकारणानां सदसद्विवेचनेन जयपराजयसंपादको नृपादीनामनुमित्याद्यात्मकः विचारापरपर्यायो व्यापारो व्यवहारः । ) कथं मन्यसे । अनयोः कतरस्य पराजयं विचारयसीत्यर्थः ॥ **अलं स्वपक्षेत्यादि** । अत्र परिव्राजकायाः

---

( १ ) B. G. N. T सह ( N स ) परिव्राजिकया देव्या सह प्रविष्टः ( २ ) B. G. N. T. भवती &c. A. इतो देवी धारिणी. ( ३ ) B. G. N. T. न परिहीयते प्रतिवादिना ( प्रतिवादिनो ) &c. म च पराजीयते केनचिद्गणदासः

**देवी**[1]—जइवि एव्वं तहवि राअपरिग्गहो से पहाणैत्तणं उवहरइ । ( क )

**परिव्रा०**—अयि राज्ञीशब्दभाजनमात्मानमपि तावच्चिन्तयतु भवती । पश्य ।

**अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ॥**
**अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ १३**

**विदुष०**—अविहा अविहा उवट्ठिदा पीठमद्दिअं पण्डिअकोसिइं पुरो कदुअ देवी[१] । ( ख )

**राजा**—पश्याम्येनाम् । यैषा

( क ) यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्वमुपहरति ।

( ख ) अपिहा अपिहा । उपस्थिता पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य देवी ।

स्त्रीत्वात्प्राकृते प्राप्ते संस्कृताश्रयणं लिंगित्वादिति मन्तव्यम् । तथाचोक्तम्—' देवद्विजनरेन्द्राणां लिङ्गिनां संस्कृतं वचः ' इति ॥ यद्यप्येवं राजपरिग्रहोऽस्य हरदत्तस्य प्रधानत्वमुपहरति ॥ ( राज्ञः परिग्रहः स्वकीयत्वेन स्वीकारः अस्य प्रभुत्वं महिमानं वर्धयते ) । **अतिमात्रभासुरत्वमित्यादि** । स्पष्टोऽर्थः ॥ ( राज्ञा स्वकीयत्वेनाङ्गीकारस्य महिमहेतुत्वमिव भवदीयपरिग्रहस्यापि तथात्वं दृष्टान्तेन समर्थयितुमाह । अतिमात्रभासुरत्वमिति । भानोः सूर्यकिरणस्य परिग्रहात् रात्रौ स्वस्मिन् संक्रमादनलः भासुरोऽप्यतिमात्रभासुरत्वं दिवातनवन्हिमपेक्ष्य पुष्यति धारयति तथा चंद्रोपि निशया परिगृहीतः संबद्धो दिवातनचंन्द्रापेक्षयेत्यर्थात् महिमानं माहात्म्यं अतिमात्रभासुरत्वं अधिगच्छति प्राप्नोति । अत्र भानुः परिग्र-

(१) B. G. N. T. धारिणी. (२) N. om. (३) B. G. T. पहुत्तण ( प्रभुत्वं ). (४) B. G. N. T. om &c. some ननु. (५) A. P. भास्वरत्वं. (६) भानुपरिग्रहादहनः (७) N. अयि. (८) B. G. N. T. देवी. (९) B. G. T. तत्तभोदी धारिणी &c. N. धारिणी.

**मङ्गलालंकृता भाति कौशिक्या यतिवेषया ।**
**त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥ १४ ॥**

**परिव्रा०**—( उपेत्य । ) विजयतां देवः ।

**राजा**—भगवत्यभिवादये ।

**परिव्रा०**—

**महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।**
**धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥ १५ ॥**

**देवी**—जेदु अज्जउत्तो । ( क )

**राजा**—स्वागतं देव्यै । (परिव्राजिकां विलोक्य । ) भगवति क्रियतामासनपरिग्रहः ।

---

( क ) जयत्वार्यपुत्रः ।

---

हादन्हः इति क्वाचित्कः पाठः असंगततया उपेक्ष्यः । अन्हः परिग्रहाभावे सूर्यस्यैवाभावात् कुतो भासुरत्वं स्यात् । उत्तरवाक्ये तु चंद्रस्य दिवापिसत्वात् माहात्म्याभावमात्रं निशाभावे दर्शितं । इह तु न तत् संभव इति विवेच्यं) । अयि-हेत्यव्ययमाश्चर्ये द्विरुक्तिरादरद्योतनाय । आयि उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य धारिणी । पीठमर्दो नाम कामपुरुषार्थसहायो नायकसमीपवर्ती पुरुषः कथ्यते । तथाचोक्तम् ' पीठमर्दः समीपस्थः कार्यालोचनकोविदः ' इति । अत्र विदूषकः परिहासेन परिव्राजिकायां पण्डितकौशिक्यां तद्धर्ममारोपयतीति मन्तव्यम् ॥ **मङ्गलेत्यादि** । मङ्गलालंकृता मङ्गलं शोभनं यथा भवति तथालंकृता भूषितैषा धारिणी यतिवेषया यतेः परिव्राजकस्य वेष इव वेषः काषायादिधारणं यस्याः सा तथोक्ता तया कौशिक्या समं सार्धं भाति प्रकाशते । अत्रोपमामाह—विग्रहवत्या शरीरिण्याध्यात्मविद्यया समं त्रयीव त्रिवेदीव । ( अध्यात्मविद्यया वेदान्तप्रतिपाद्यविद्यया ब्रह्मात्मैक्यज्ञानेन समं त्रैकर्मप्रतिपादकवेदत्रयमिव । मंगलेन धर्मेण मङ्गलार्थद्रव्यैश्चालंकृता । ) विग्रहवतीव विभक्तिविपरिणामेन योजनीयम् ॥ **महासारेत्यादि** । महासारप्रसवयोः । महा-

( सर्वे यथोचितमुपविशन्ति । )

**राजा**—भगवत्यत्रभवतोर्हरदत्तगणदासयोः परस्परेण ज्ञानसंघर्षो जातः । तदत्रभवत्या प्राश्निकपदमध्यासितव्यम् ।

**परिव्रा॰**—( सस्मितम् । ) अलमलमुपालम्भेन । पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा ।

**राजा**—मामैवम् । पण्डितकौशिकी खलु भगवती । पक्षपातिनावहं देवी च ।

**आचार्यौ**—सम्यगाह देवः । मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति ।

**राजा**—तेनहि प्रस्तूयतां विवादः ।

**परिव्रा॰**—देव प्रयोगप्रधानं हि नाट्यशास्त्रं । किमत्र वाग्व्यवहारेण । कथं वा देवी मन्यते ।

**देवी**—जइ मं पुच्छसि एदाणं विवादो एव्व ण मे रुच्चइ । ( क )

---

( क ) यदि मां पृच्छसि एतयोर्विवाद एव न मे रोचते ।

---

न्सारो वरः प्रसवः संतानं ययोस्ते तयोः । सदृशाक्षमयोः सदृशी समाना क्षमा सहिष्णुत्वं ययोस्ते तयोः । शेषं स्पष्टम् ॥ भवतु पश्याम उरभ्रसंपातम् । किं मुधावेतनदानेन । मा चण्डि । **अन्योन्येत्यादि** ( प्रत्याययितव्यम् बोधयितव्यम् इत्यर्थः । प्रतिपूर्वादिणोण्यन्तात् तव्यः । बोधार्थत्वात् नगम्यादे-

---

( १ ) B. G. N. T. om. ( २ ) B. G. N. T. परस्परं विज्ञानसंघर्षिणो भगवत्या &c. and P. विज्ञानसंघर्षो. ( ३ ) B. G. N. T. om one अलम. ( ४ ) B G. N. T. सति for. विद्यमानेऽपि. ( ५ ) B. G. N. T. नैतदेवम. ( ६ ) P. A. भवती. ( ७ ) A. विवादवस्तु. ( ८ ) P. A. put the sentence कथं &c. into the mouth of the king.

**गण०**—नं मां देवी समानविद्यतः परिहीनमनुमन्तुमर्हति ।

**विदूष०**—देविं देक्खामो उँरब्भसंवादं । किं मुहावेअणदाणेण ।
( क )

**देवी**—णं कलहप्पिओसि । ( ख )

**विदू०**—मा चँण्डि । अण्णोण्णकँलहिदाणं मत्तहत्थिणं एक्कदरस्सि अणिज्जिदे कुदो उवसमो । ( ग )

**राजा**—ननु स्वाङ्गसौष्ठवाभिनयमुभयोर्दृष्टवती भगवती ।

**परिव्रा०**—अथ किम् ।

**राजा**—तदिदानीमतःपरं किमाभ्यां प्रत्याययितव्यम् ।

**परिव्रा०**—एतंदेव वक्तुकामास्मि ।

**[१]श्लिष्टा क्रिया कस्यचिदात्मसंस्था**
**संक्रान्तिरन्यस्य विशेषयुक्ता ।**

---

( क ) देवि पश्याम उरभ्रसंवादम् । किं मुधावेतनदानेन ।

( ख ) ननु कलहप्रियोऽसि ।

( ग ) मा चण्डि । अन्योन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ।

---

श: । ) **श्लिष्टेत्यादि** । कस्यचित्कस्यापि पुरुषस्यापि क्रिया शिक्षा । विद्याभ्यास इत्यर्थः । आत्मसंस्था आत्मनिष्ठा सती श्लिष्टा संगता । रम्या भवतीत्यर्थः । अन्यस्य पुरुषस्य संक्रान्तिः शिष्येषु क्रियासंक्रमणम् ।

---

( १ ) B. G. N. T. P. देवि न मां समान ( B G. T. विद्यया, P. विद्यातः and others विद्यतया. ) ( P. T. N. परिभवनीयं &. G. B. परिभवनं ) ( T. N. अवगतु, B. G. अवगमयितुं & P. मंतुं &. others अनुमंतु or. अवमंतुं ) अर्हसि. &. न मां देवी .... परिभवनीयमनुमंतुं अर्हति. ( २ ) B. G. T. भो देक्खाभो. N. भोदि पेक्खामो. ( ३ ) T. उअरंभरि ( उदरभरि ). ( ४ ) N. भा एव्वं. B. G. T. मा एव्वं चंडि. ( ५ ) B. G. N. T. कलहप्पिआणं. ( ६ ) B. G. N. T. अतिशयं. ( ७ ) द्वाभ्यां. ( ८ ) B. G. N. T. तदेव. ( ९ ) P. A. शिष्टा.

**यस्योभयं साधु स शिक्षकाणां**
**धुरि प्रतिष्ठापयितव्य एव ॥ १६ ॥**

**विदूष०**—सुदं अज्जेहिं भअवदीए वअणं । एसो पिण्डिदत्थो उवदेसदंसणेण[1] णिण्णओ त्ति । ( क )

**हर०**—परमुचितं[2] नः ।

**गण०**—देवि[3] एवं स्थितमेवं[4] ।

**देवी**—जदा उण अमेहाविणी[5] सिस्सा उवदेसं मलिणेदि तदा आअरिअस्स दोसो णं[6] । ( ख )

**राजा**—देवि एवमापद्यते[7] ।

**गणदा०**—विनेतुरद्रव्यपरिग्रह एवे[9] बुद्धिलाघवं प्रकाशयति[10] ।[8]

---

( क ) श्रुतमार्याभ्यां भगवत्या वचनम् । एष पिण्डितार्थ उपदेशदर्शनेन निर्णय इति ।

( ख ) यदा पुनरमेधाविनी शिष्या उपदेशं मलिनयति तदाचार्यस्य दोषो ननु ।

---

। संक्रान्तिशब्दोऽत्रान्तर्भावितण्यर्थः । विशेषयुक्तातिशयवती । यस्य पुरुषस्योभयमात्मसिद्धिः परसंक्रमणं च साधु रम्यं स पुरुष एव शिक्षकाणामुपदेशकानां धुर्यग्रे प्रतिष्ठापयितव्यः प्रतिष्ठां प्रापयितव्यः ॥ श्रुतमार्याभ्यां भगवत्या वचनम् । एष पिण्डितार्थः ( निष्कृष्टार्थः ) उपदेशदर्शनान्निर्णय इति । अत्र मालविकादर्शनसंदेहनिर्णयाद्युक्तिर्नाम संध्यङ्गमुक्तं भवति ॥ यदा पुनर्मन्दमेधा शिष्या उपदेशं मलिनयति तदाचार्यस्य दोषो नु ।

---

( १ ) B. G. N. T. दंसणादो. (२) B. G. N. T. परमभिमतं and A. परमरुचितं. ( ३ ) A. देव. ( ४ ) B. G. N. T. om. (५) B. G. N. T. मंदमेधा. ( ६ ) B. G. N. T. take last णं here. ( ७ ) P. A. उपपद्यते, N. आपठ्यते &. आपतति. ( ८ ) B. G. N. T. read this speesh as a part of the above speech of the King. ( ९ ) B. G. N. T. परिग्रहोऽपि. ( १० ) N. add इति.

**देवी**—( गणदासं विलोक्य जनान्तिकम्[1] ) कहं दाणिं । अलं अज्ज-उत्तस्स[2] उच्छाहकालणं मणोरहं पूरिअ । ( प्रकाशम्[3] ) विरम णिरत्थआ-दो आरम्भादो । ( क )

**विदू०**—सुट्ठु होदि भणादि । भो गणदास संगीदै[4]आवदेसेण सरस्सई उवाअणमोदआइं खादअमाणस्स किं[5] दे सुलह[6]णिग्गहेण विवादे-ण । ( ख )

**गण०**—सत्यमयमेवार्थो देवीवचन[7]स्य । श्रूयतामवसरप्राप्तमिदम्[8] ।

---

( क ) कथमिदानीम् । अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयि-त्वा । विरम निरर्थकादारम्भात् ।

( ख ) सुष्ठु भवती भणति । भो गणदास संगीतकापदेशेन सरस्व-त्युपायनमोदकान्खादतः किं ते सुलभनिग्रहेण विवादेन ।

---

. नुः प्रश्ने ॥ ( अद्रव्यस्यावस्तुनो मंदमतेरिति यावत् । परिग्रहो विनेयतया-स्वीकारः कृदभितो भावो द्रव्यवत् प्रकाशते इत्युक्तेः परिगृहीतमद्रव्यमपि सुपात्रं भवतीत्यर्थः । विनेतुः शिक्षकस्य बुद्धेः प्रतिभाया लाघवं सौन्दर्यं प्रका-शयत्युद्भावयति । ) ( संगतिकपदेन संगीतरूपलक्ष्येण उपलब्धानि नित्यानुशलिनेन अनुभूतानि सरस्वत्या उपायनभूतानि उपढौकनद्रव्याणीव मोदकानि खादमानस्य भक्षयतस्तव सुखनिग्रहेण सुखतिरस्कारकारेण वि-वादेन शुष्ककलहेन किं । तदनुशीलयतस्तव ईदृक्कलहे प्रवृत्तिरनुचिते-

---

( १ ) B. G. T. N. ( जनांतिकं N. स्वगतं ) कहंदाणिं । ( गणदासं विलोक्य प्रकाशं ) अलं &c. Po. कहं दाणिं । ( गणदासं विलोक्य जनांतिकम् ) अलं &c. A ( गणदासं विलोक्य जनातिकम् ) कहं &c. ( २ ) A. add. एदस्स. ( ३ ) B. G. T. add परि and A. रक्खिअ ( रक्षयित्वा ). ( ४ ) B. G. T. संगीदअपदोवलम्भिअ. N. सं.. पदं लम्भिअ; Po. A. सगीदओव-देसं आरहिअ. ( ५ ) P. A. किंदे before सरस्सई &c. ( ६ ) N. सुह ( सुख ). ( ७ ) N. वाक्यस्य. ( ८ ) B. G. N. T. इदानीम्; P. om.

**लब्धास्पदोऽस्मीति विवादभीरो-**
**स्तितिक्षमाणस्य परेण निन्दाम् ।**
**यस्यागमः केवल जीविकार्थं**
**तं ज्ञानपण्यं वणिजं वदन्ति ॥ १७ ॥**

**देवी**—अइरोवणिदा वो सिस्सा । अवरिणिट्ठिदस्स उवदेसस्स अण्णअं पआसणं । ( क )

**गण०**—अत एव मे निर्बन्धः ।

---

( क ) अचिरोपनीता वः शिष्या । अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रकाशनम् ।

---

त्यर्थः । ) **लब्धास्पदोऽस्मीत्यादि** । ( अहं लब्धास्पदः प्राप्तप्रतिष्ठोऽस्मीति हेतोर्विवादभीरोर्विवादे कदाचित् पराजयःस्यादित्याशंकया ततो भीतस्य परकर्तृकां निन्दां । स्त्रीविहिताकारयोगे वा षष्ठीति कर्तरि तृतीया । तितिक्षमाणस्य सहमानस्य यस्य जनस्य केवलजीविकार्थे आत्मजीवनमात्रार्थं आगमः शास्त्रज्ञानं लाभोपायश्च भवति । तं ज्ञानमेव पण्यं विक्रेयं यस्य तादृशं वणिजं जीविकाभंगभीरुतया अपकृष्टपण्डित मित्यर्थः । वदन्ती पण्डिता मन्यंते । ) ( अचिरोपनीतायां शिष्यायां पुनः प्रतिष्ठितस्योपदेशस्यान्याय्यं प्रकाशनम् ) अचिरोपनीता वः शिष्या । तदप्रतिष्ठितस्योपदेशस्य पुनरन्याय्यं प्रकाशनम् ॥ ( अचिरेण आशु उपनीता उपदेशग्रहणाय दीक्षिता ते शिष्या मालविका इत्यर्थः । अतोऽचिरोपनीतत्वेन न सम्यक् शिक्षितेति गम्यते अपरिनिष्ठितस्य स्थैर्यमप्राप्तस्य उपदेशस्य शिष्ये संक्रामणरूपव्यापारस्य आवेदनं ज्ञापनं प्रकृतेऽभिनयदर्शने-

---

( १ ) P. A. जीविकैव. ( २ ) N. अइरोवणीदाए सिस्साए उणपडिट्ठिदस्स उवदेसस्स अण्णाअं पआसणं. ( ३ ) B. G. T. दे. ( ४ ) A. Po. add ता. ( ५ ) A. renders by असमाप्तस्य. ( ६ ) B. G. T. add उण. ( ७ ) A. om.

**देवी**—तेण हि दुवेवि उवदेसं भअवदीए दंसह । ( क )

**परिव्रा०**—[1]नैतन्न्याय्यम् । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

**देवी**—( आत्मगतम्[2] । ) मूढे[4] मं[5] जग्गतिं वि सुत्तं विअ करेसि । ( इति सासूयं परावर्तते ) ( ख )

( राजा देवीं परिव्राजिकायै दर्शयति । )

**परिव्रा०**—( विलोक्य[6] । )

**अनिमित्तमिन्दुवदने किमत्रभवतः पराङ्मुखी भवसि ।**
**प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः ॥१८॥**

---

( क ) तेन हि द्वावप्युपदेशं भगवत्यै दर्शयतम् ।

( ख ) मूढे मां जाग्रतीमपि सुप्तामिव करोषि ।

---

न सदसत्वबोधनं अनार्यमनुचितमित्यर्थः । एतदुक्तिश्च राज्ञा मालविकायाः कथंचिदपिदर्शनं न भवत्वित्याशयेन गणदासस्य तदभिनयनिवारणार्थेति द्रष्टव्या । ) ( जाग्रतीं मालविकाया राजसमीपे निगूहनरूपे स्वकर्तव्ये अप्रमत्ताम् । सुप्तां प्रमत्तामिव । ) **अनिमित्तमित्यादि** । ( हे इंदुवदने प्रसन्नमुखि अत्रभवतो मान्याद्राज्ञः सकाशात् किं कथं अनिमित्तं पराङ्मुखी विमुखी भवसि । कुटुंबिन्यः सत्कुलस्त्रियो भर्तृषु प्रभवन्त्यः प्रभुत्ववत्यो ऽपि कारणादेव कोपो यासां तादृश्यो भवन्ति न मुधा । तथा च कारणाभावे किमिति तव राज्ञः पराङ्मुखत्वं । ) अत्र देवी कोपेन वस्तुविच्छेदे प्राप्ते विदूषककृतं प्रोत्साहनमुत्तराङ्गोपयोगित्वेनाविच्छेदकारणत्वाद्बिन्दुरित्यनु-

---

( १ ) B. G. Interchange. ( २ ) B. G. N. T. add देवी. ( ३ ) Po. A. B. G. N. T. जनांतिकम. ( ४ ) B. G. N. T. A. Po. add परिव्वाजिए. ( ५ ) P. किं मं and A. किं for मं. ( ६ ) B. G. N. T. om.

**विदूष०**—णं सकारणादो एव्व । अत्तणो पक्खो रक्खिदव्वो त्ति । ( गुणदासं विलोक्य । ) दिट्ठिआ कोवव्वाएण देवीए परित्तादो भवं । सुसिक्खिदो वि सव्वो उवदेसेण णिण्णादो होइ । ( क )

**गण०**—देवि श्रूयताम् । एवं जनो गृह्णाति । तदिदानीम्

**विवादे दर्शयिष्यन्तं क्रियासंक्रान्तिमात्मनः ।**
**यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥ १९ ॥**

( आसनादुत्तिष्ठति । )

**देवी**—( स्वगतम् । ) का गई । ( प्रकाशम् । ) पहवदि आआरिओ सिस्सजणस्स । ( ख )

**गण०**—चिरमपदे शङ्कितोऽस्मि । ( राजानं विलोक्य । ) अनुज्ञातं देव्या । तदाज्ञापयतु देवः कस्मिन्नभिनेयवस्तुन्युपदेशं दर्शयिष्यामि ।

**राजा**—यदादिशति भगवती ।

**परिव्रा०**—किमपि देव्या मनसि वर्तते । तच्छङ्कितास्मि ।

---

( क ) ननु सकारणमेव । आत्मनः पक्षो रक्षितव्य इति । दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान् । सुशिक्षितोऽपि सर्व उपदेशेन निष्णातो भवति ।

( ख ) का गतिः । प्रभवत्याचार्यः शिष्यजनस्य ।

---

संधेयम् । ) विवाद इत्यादि । स्पष्टोऽर्थः ॥ ( अपदेशो निराकृतिस्तत्राशङ्का जाता यस्य तारकादित्वात् इतच् । कदाचित् शिष्यशिक्षादर्शने निवारितो भवेयं इति शङ्का स्थिता । सा च राज्ञ्या एतद्वचनेन दूरीकृतेत्यर्थः । ) ( शर्मिष्ठायाः शुक्राचार्यस्य पत्न्याः कर्ति कृदभिहितभावत्वात्

---

( १ ) Pn. कारणादो. ( २ ) Pn. B. G. T. उवदेसदंसणे. ( ३ ) P. णिउणो ( निपुणो ) & G. A. णिल्हादो ( निन्हादो ). ( ४ ) B. G. N. T. दर्शयिष्यामि. ( ५ ) B. G. N. T. उत्थातुमिच्छति. ( ६ ) A. P. अज्जो. ( ७ ) B. G. N. T. अपदेश &c. ( ८ ) B. G. N. T. अपलोक्य. ( ९ ) Pn. अभिनेय°. ( १० ) B. G. N. T. ततः

**देवी**—भण विस्सध्दं[1]। णं पहविस्सं[2] अत्तणो परिअणस्स। ( क )

**राजा**—मम चेति ब्रूहि।

**देवी**—भअवदि भणै[3] दाणिम् ( ख )

**परिव्रा०**—देवं[4] चतुष्पदोद्भवं[5] छलितं[6]मुदाहरन्ति[7]। तत्रै[8]कार्थसंश्रयमुभयोः प्रयोगं पश्यामः। तावता ज्ञायत एवात्रभवतोरुपदेश[9]तारतम्यम्।

**आचार्यौ**—यदाज्ञापयति भगवती।

**विदूष०**—तेण[10] दुवेवि वग्गा[11] पेक्खाघरए संगीदरअणं करिअ अत्त[12]भवदो दूदं पेसअन्दु[13]। अहवा मुदङ्गसद्दो एव्व णो उट्ठावइस्सादि। (ग)

---

( क ) भण विश्रब्धम्। ननु प्रभविष्याम्यात्मनः परिजनस्य।

( ख ) भगवति भणेदानीम्।

( ग ) तेन द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा अत्रभवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति।

---

कृतमित्यर्थः। चतुर्भ्यः पादेभ्य उत्तिष्ठतीत्युत्थं उत्तरपदाद्द्विगुः। चतुष्पदीयुक्तमित्यर्थः। छलिकं तन्नामधेयकं नाटकं दुष्प्रयोज्यं दुःखेन प्रयोक्तुं अभिनेतुं योग्यमुदाहरन्ति कथयन्ति पण्डिता इति शेषः। उभयोर्हरदत्त गणदासयोः एकार्थः तद्रूप एकस्य उद्देश्यः संश्रयो यस्यैतादृशं प्रयोगं क्रमेण उभयकर्तृकं तन्नाटकप्रयोगं अभिनयं पश्यामः प्रार्थनायाम् लोट्।) तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा तत्र भवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति॥ विजयी

---

( १ ) B. G. N. T. वीसद्धं. ( २ ) N. T. पहवदि पभू &c. ( ३ ) N. भणेदानीम. ( ४ ) B. G. add शर्मिष्ठायाः कृतिः। &. N. T. शर्मिष्ठायाः कृतिं &c. ( ५ ) B. G. N. T. चतुष्पदोत्थं. ( ६ ) B. G. N. T. छलिकम. ( ७ ) N. T. add दुष्प्रयोज्यम्. ( ८ ) Po. A. तत्रभवतोः ( ९ ) B. G. N. T. A. Po. उपदेशान्तरम्. ( १० ) B. G. N. T. add. हि. ( ११ ) Po गदुअ. ( १२ ) N. तत्तभवदी. ( १३ ) A. Po. विसज्जेह ( विसर्जतम् ).

**हरद०**—तथा । ( इत्युत्तिष्ठति । )

( गणदासो देवीमवलोकयति । )

**देवी**—( गणदासं विलोक्य । ) [1]विअई होहि । णहु विअअपच्चत्थिणी अहं आअरिअस्स । ( क )

( उभौ प्रस्थितौ । )

**परिव्रा०**—निर्णयाधिकारे ब्रवीमि । सर्वाङ्[2]सौष्ठवाभिव्यक्तये [3]विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ।

**उभौ**—नेदमप्यावयोरुपदेश्यम् । ( इति निष्क्रान्तौ । )

**देवी**—( राजानं [6]विलोक्य । ) जई राअकज्जेसु वि ईरिसी उवाअ णिउणदा अज्जउत्तस्स ता सोहणं भवे । ( ख )

**राजा**—देवि[10]

---

( क ) विजयी भव । न खलु विजयप्रत्यर्थिन्यहमाचार्यस्य ।

( ख ) यदि राजकार्येष्वपीदृश्युपायनिपुणतार्यपुत्रस्य ततः शोभनं भवेत् ।

---

भव ॥ ( तारतम्यनिश्चयकरणस्याधिकारे स्थितेति शेषः ब्रवीमि उपदिशामि । ) **सर्वाङ्गेत्यादि** । ( सर्वाङ्गसौष्ठवाभिव्यक्तये सर्वेषां अंगानां सौष्ठवस्य सौन्दर्यस्याभिव्यक्तये प्रकाशनाय विगतनेपथ्ययोः आहार्याभरण सज्जारहितयोः पात्रयोः अभिनेययोः नायकयोः प्रवेशः रंगभूमौ समागमोऽस्तु । ) अत्र गुणवत्वस्य गम्यमानत्वाद्विलोभनं नाम संध्यंगमुक्तं भवति ।

---

( १ ) B. G. N. T. धारिणीम. ( २ ) N. विअई होहि, and B. G. T. जयी भोदु अज्जो । ण विअअपच्चत्थिणी (T. विअअब्भत्थिणी) अअं अज्जस्स. Po. णहि । विअअपच्चत्थिणी अहं अज्जस्स ण होमि । ( ३ ) add °अभिनय°. ( ४ ) Pn. A. विरल. ( ५ ) N. B. G. T. om अपि. ( ६ ) B. G. N. T. अवलोक्य. ( ७ ) Po. A. add इदरेसु. ( ८ ) N. om. वि. Po A. एव्वं. ( ९ ) A. B. G. T. om. उवाअ°. ( १० ) B. G. N. T. om.

**अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।**
**प्रायः समानविद्याः परस्परयशः पुरोभागाः ॥ २० ॥**

( नेपथ्ये मृदङ्गध्वनिः । सर्वे कर्णं ददति । )

**परिव्रा०**—हन्त प्रवृत्तं संगीतकम्[1] । तथा ह्येषा

**जीमूतस्तानितविशङ्किभिर्मयूरै-**
**रुद्ग्रीवैरनुरसितस्यपुष्करस्य[2] ।**
**निर्ह्रादिन्युपहित[3]मध्यमस्वरोत्था-**
**मायूरी मदयति मार्जना मनांसि ॥ २१ ॥**

---

**यदि राजकार्येष्वित्यादि** । अत्र गूढार्थोद्भेदनादुद्भेदो नाम संध्यंगमुक्तं भवति । **अलमन्यथागृहीत्वेत्यादि** । स्पष्टोऽर्थः । ( परस्परयशसि अन्योन्यकीर्तौ पुरोभागा दोषैकदर्शनं येषां ते ) । **जीमूतस्तानितेत्यादि ।** जीमूतस्तनितविशंकिभिर्जीमूतस्य स्तनितं गर्जितं विशंकंत इति तथोक्तास्तैरुद्ग्रीवैरुत्कंठैः ( हर्षात् ) मयूरैः शिखंडिभिरनुरसितस्यानुध्वनितस्य पुष्करस्य वाद्यभांडमुखस्य मायूरी मयूरप्रिया मार्जना मनांसि मदयति हर्षयति । कीदृशी मार्जना । उपहितमध्यमस्वरोत्था । उपहितो योजितो मध्यमस्वरो मध्यमसंज्ञकस्वरस्तस्मादुत्तिष्ठत्युदेतीति तथोक्ता । निर्ह्रादिन्यतिशयनिनादा ( निर्ह्रादवती मधुरगंभीरेत्यर्थः ) । मार्जना नाम पुष्करवादनाविशेषः । तथोक्तं भारतीये । षोडशाक्षरसंपन्नं चतुर्मार्गं तथैव च । द्विलेपनं षट्करणं त्रियतिं त्रिलयं तथा ॥ त्रिगतं त्रिप्रचारं च त्रिसंयोगं त्रिपाणिकं ॥ दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनं । एभिरंगैस्तु संपन्नं वाद्यं पुष्करजं भवेत् ॥ तत्र ' मायूरी चार्धमायूरी तथा कार्मारवीति च । तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ गांधारो वामके कार्यः षड्जो दक्षिणपुष्करे । मध्यमश्चोर्ध्वके कार्यो मायूर्यास्तु स्वरास्त्वमी ॥ वामके

---

( १ ) N. संगीतम. ( २ ) B. G. T. अनुगमितस्य. ( ३ ) T. उपचित ( as an altirnative ).

**राजा**—देवि सामाजिका भवामः ।

**देवी**— ( आत्मगतम् ) अहो अविणओ अज्जउत्तस्स । ( क )

( सर्वे उत्तिष्ठन्ति )

**विदूषकः**—( अपवार्य ) भो धीरं गच्छह्म । मा क्खु अत्तभोदि धारिणी विसंवादइस्सदि । ( ख )

**राजा**—

**धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यनादोऽयम्**
**अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥**

( इति निष्क्रान्ताः सर्वे )

इति प्रथमोऽङ्कः

---

( क ) अहो अविनय आर्यपुत्रस्य ।

( ख ) भो धीरं गच्छामः । मा खल्वत्रभवती धारिणी विसंवादयिष्यति ।

---

पुष्करे षड्ज ऋषभो दक्षिणे तथा । धैवतश्चोर्ध्वगोत्रार्धमायूर्यां निर्दिशेद्बुधः ॥ ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे । पंचमश्चोर्ध्वगः कार्यः कार्माख्याः स्वरा अमी ॥ इति ॥ भोः धीरं गच्छामः । तत्रभवती धारिणी विसंवादयिष्यति । (विसंवदिष्यति विप्रलप्स्यते अन्यथा मंस्यते ।) **धैर्यावलंबिनमित्यादि** । अयं मुरजवाद्यरागो मुरजवाद्यस्य रंजकत्वं धैर्यावलंबिनमपि मां त्वरयति संभ्रमयति । सिद्धिपथं सिद्धिमार्गमवतरतः प्राप्नुवतः स्वमनोरथस्यात्मवांच्छितस्य शब्द इव ध्वनिरिव । अत्र बीजस्य

---

( १ ) A. साम्रवाहिका, B. G. N. T. add तस्याः Pn सामवायिकाः and Po सामायिकाः ( २ ) B. G. N. T. स्वगतम. ( ३ ) P. A. B. G. T. गच्छ. ( ४ ) B. G. N. T. तत्तभोदि for मा खु अत्तभोदि. ( ५ ) N. रागः; B. G. T. रावः

पुनरावर्तनात् समाधानं नाम संध्यंगमुक्तं भवति । अत्रैव सुखागमस्य गम्य-
मानत्वात्प्राप्तिर्नाम संध्यंगमुक्तं भवति । अत्रोपक्षेपादिषु संध्यंगेषु कतिचिदेव
कविनोक्तानि नेतराणि तथापि न दोषः । ' न्यूनमप्यत्र यैः कैश्चिदंगैर्नाट्यं
न दूष्यति । यद्युपात्तेषु संपत्तिराराधयति तद्विदः ॥ ' इति वचनात् ।
अत्र नृत्यदर्शननिश्चयांते प्रथमांकार्थे समाप्तेऽपि तमसामाप्यैवोत्तरांकादौ
विष्कंभादौ प्रतिपाद्यायाः संगीतरचनाया अत्रैव निपातनादंकावतरणं ना-
मार्थोपक्षेपकं उक्तं भवति । तथा चोक्तम् । 'अंकावतारस्त्वंकान्ते पात्रेणांकस्य
सूचनात् ' ॥ इति ॥ इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये
मालविकाग्निमित्रव्याख्याने प्रथमोऽकः ॥

---

## द्वितीयोऽङ्कः।

( ततः प्रविशति संगीतरचनायां कृतोयामासनस्थः सवयस्यो[1] राजा[2] धारिणी परिव्राजिका विभवतश्च परिवारः )

**राजा**—भगवति अत्रभवतोराचार्ययोः प्रथममुपदेशं[3] कतरस्य द्रक्ष्यामः।

**परिव्राजिका**—ननु समाने ऽपि ज्ञानवृद्ध[4]भावे वयोऽधिक[5]त्वाद्गणदासः पुरस्कारमर्हति ।

**राजा**—तेन[6] हि मौद्गल्य एवमे[7]वात्रभवतोरावेद्य स्व[8]नियोगमशून्यं कुरु।

**कञ्चुकी**—यदाज्ञापयति देवः। ( इति निष्क्रान्तः )

( प्रविश्य )

**गणदासः**—देव शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदा[9]। तस्याश्चतुर्थवस्तु[10]नः प्रयोगमेकमनाः श्रोतुमर्हति देवः[11]।

**राजा**—आचार्य बहुमानादवहितोऽस्मि[12] ।

---

**ततः प्रविशतीत्यादि** ॥ ' भगवति अत्रभवतोः ' इत्यादिना ' गणदासः पुरस्कारमर्हति ' इत्यन्तेन राज्ञ उपायेन मालविकादर्शनप्रवर्तनं प्रयत्नो नाम द्वितीयावस्थितिरिति मन्तव्यम् । अत्र विन्दुप्रयत्नयोः समन्वयात्प्रतिमुखसंधिरित्यनुसंधेयम् ॥ **देव शर्मिष्ठाया इत्यादि** । शर्मिष्ठा नाम वृषपर्वणो राक्षसराजस्य दुहिता । तस्याः कृतिः काव्यम् । लयमध्या लयेन तालकालेन मध्या मध्यलययुक्ता । चतुष्पदा चत्वारि पदानि खण्डानि

---

(१) N. om. (२) N. Interchange. (३) B. G. N. T. उपदेशो दृश्यतां ( T. उपदेशं दृश्यतां as alternative ). (४) B. G. T. om वृद्ध ( T. as alternative ). (५) N. ( T. as alternative ) वृद्धत्वात्. (६) N. om तेनहि. (७) B. G. N. T. om एव. (८) B. G. N. T. om स्व. (९) N. T. add अस्ति. (१०) B. G. T. तस्याश्चतुष्पदवस्तुकं ( वर्णकं ) Po. चतुर्थवस्तुकप्रयोगं &c. (११) B. G. T. take देवः before श्रोतुं &c. (१२) T. add ( तत्प्रवेशय पात्रं. )

( निष्क्रान्तो गणदासः )

**राजा**—( जनान्तिकम् । ) वयस्य

**नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः**
**संहर्तुमधीरतया व्यवसितमिव मे तिरस्कारिणीम्॥ ९ ॥**

**विदूषकः**—( अपवार्य ) भो[3] उवट्ठिदं णअणमहु । [4]संणिहिद मक्खिअं अ । ता अप्पमत्तो दाणिं पेक्ख । ( क )

( ततः प्रविशत्याचार्यप्रत्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका )

---

( क ) भो उपस्थितं नयनमधु । सन्निहितमाक्षिकं च । तदप्रमत्त इदानीं पश्य ।

---

यस्याः सा तथोक्ता । तस्याः कृतिसंबन्धिनश्चतुर्थवस्तुनश्चतुर्थस्य तुर्यस्य वस्तुनः प्रबन्धस्य प्रयोगमभिनयमेकमना अवहितः सन् श्रोतुमर्हति । अत्र शृङ्गारस्य प्रतिपाद्यमानत्वाल्लयमध्येत्युक्तम् । तथा चोक्तं भारतीये—शृङ्गार-हास्ययोर्मध्यलयः । करुणे विलम्बितः । वीररौद्राद्भुतबीभत्सभयानकेषु-द्रुतः ॥ ' इति ॥ नेपथ्यपरिगताया इति । नेपथ्यपरिगताया यवनिकान्तरि-तायास्तस्या मालविकाया दर्शनसमुत्सुकमवलोकनोत्काण्ठितं मे चक्षुर धीरतया तरलतया तिरस्कारिणीं यवनिकां संहर्तुमपनेतुं व्यवसितमिवोद्यु-क्तमिव । अत्रेष्टार्थविषयेच्छाया गम्यमानत्वाद्विलासो नाम संध्यङ्गमुक्तं भवति । **ततः प्रविशतीत्यादि** । आचार्यविक्ष्यमाणाङ्गसौष्ठवा । आचा-र्येण गणदासेनावेक्ष्यमाणमङ्गानां सौष्ठवं यस्याः सा तथोक्ता ) सौष्ठवं नामा-ङ्गानां शोभनावस्था ॥ यथोक्तम् ' अनुच्चनीचचलतामङ्गानां समपादताम् । कटिकूर्परशीर्षांसकण्ठानां समरूपताम् ॥ रम्यां प्रतीकविश्रान्तिमुरसश्च

---

( १ ) N. P. परि for गृह &. A परिणतायाः ( २ ) A. तिरस्करणम्. ( ३ ) B. G. N. T. om. ( ४ ) T. renders ( संनिहितमाक्षिकं ) &. A. Po. संणिहिदं मक्खिअं च. ( ५ ) T. N. आवेक्ष्य &c. and B. G. प्रत्यक्षमाणा.

**विदूषकः**—( जनान्तिकम् ) पेक्खदु भवं। ण खु से पडिच्छन्दादो परिहीअदि महुरदा। ( क )

**राजा**—( जनान्तिकम् ) वयस्य

**चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम्।**
**संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥**

**गणदासः**—वत्से मुक्तसाध्वसा सत्वस्था भव।

**राजा**—( आत्मगतम्। ) अहो सर्वस्थानानवद्यतां रूपविशेषस्य। तथाहि।

---

( क ) पश्यतु भवान्। न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता।

---

समुन्नतिम्। अभ्यासोपहितामाहुः सौष्ठवं नृत्यवेदिनः ॥' पश्यतु भवान्। न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता ॥ अत्रापवार्येत्येतन्नियत श्राव्यार्थभेदस्यापवारितस्य विवक्षितत्वे कविना प्राक्प्रत्युक्तमिति मन्तव्यम्। यथोक्तं वसन्तराजीये ' अर्थस्त्वेकेन विज्ञेयो नियतश्राव्य इष्यते। द्विविधः स परिज्ञेयो जनान्तश्चापवारितः ॥' अत्र ' परैरलक्ष्यव्यापारं कथितोऽर्थोऽपवारितः। उक्त्वा प्रागपवार्येति पश्चादेनं प्रयोजयेत् ॥' इति ॥ **चित्रगतायामित्यादि**। मे हृदयं मनश्चित्रगतायामालेख्यगतायामस्यां मालविकायां कान्तिविसंवादशङ्कि कान्तेः शोभाया विसंवादं विपर्यासं शङ्कत इति तथोक्तम्। ( एतस्या ईदृशी कान्तिर्भवेन्नवेति संदेहयुक्तमासीदिति शेषः )। संप्रतीदानीम्। साक्षाद्दर्शनवेलायामित्यर्थः। इयं मालविका येन चित्रकारेणालिखिता तं चित्रकारं शिथिलसमाधिं शिथिलप्रयत्नं मन्ये जानामि ॥ मुक्तसाध्वसा परित्यक्तभया। सभाकम्परहितेत्यर्थः। सत्वस्था ( सत्वे स्वभावे प्रकृतौ वा तिष्ठति स्था—क अव्यग्रा इति यावत् )। सत्व-

---

( १ ) B. G. N. T. वि ( अपि ) for परि. ( २ ) अपवार्य. ( ३ ) स्वगतम. ( ४ ) P. A. B. G. T. सर्वास्ववस्थास्वनवद्यता रूप T. ( रूपस्य ) विशेषस्य. ( ५ ) P. A. om. तथा हि.

**दीर्घाक्षं शरदिन्दुकान्ति[1] वदनं बाहू नतावंसयोः[2]**
**संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।**
**मध्यः पाणिमितो नितम्बि[3] जघनं पादावरालाङ्गुली**
**छन्दो नर्तयितुर्यथैव मनसः[4] श्लिष्टं तथास्या वपुः ॥ ३ ॥**

**मालविका**—( उपगानं[5] कृत्वा चतुष्पदं वस्तु[6] गायति । )

---

गुणयुक्ता अविकृता भवेत्यर्थः । यथोक्तम्—' चित्तस्याविकृतिः सत्वं विकृतेः कारणे सति ' इति । अत्र विकृतिकारणं नायकसंनिधिः ॥ अहो इत्याश्चर्ये । सर्वस्थानानवद्यता सर्वेषु स्थानेषु सर्वावयवेष्वनवद्यता निर्दोषता । रमणीयतेत्यर्थः । **दीर्घाक्षमित्यादि** । वदनं मुखं दीर्घाक्षं दीर्घे आयते अक्षिणी लोचने यस्य ( षच्समासान्तः ) तत्तथोक्तम् । शरदिन्दुकान्ति शरदिन्दोः शरच्चन्द्रस्य कान्तिरिव कान्तिर्यस्य तत्तथोक्तम् (प्रसन्नमित्यर्थः) । बाहू भुजावंसयोः स्कन्धयोर्नतौ नम्रौ ( लंबमानावित्यर्थः ) । मध्योऽवलग्नं पाणिमितः पाणिना हस्तेन मितः परिमितः ( पाण्युपलक्षणेन मुष्टिमितः ) । जघनं नितम्बि नितम्बातिशययुक्तम् । पादौ चरणावरालाङ्गुली अराला आकुञ्चिता अङ्गुलयो ययोस्तौ तथोक्तौ । अस्या मालविकाया वपुः शरीरं नर्तयितुर्नृत्ताचार्यस्य ( मनसः ) छन्दोऽभिप्रायो यथा यादृशस्तथा तेन प्रकारेण श्लिष्टं संगतम् । ( यादृशांगसौष्ठवे सति नर्तनं सुनिपुणं भवति तथैव अस्या वपुर्देहः श्लिष्टं संहतम् । स्वतःसिद्धसौन्दर्यादिगुणकतया संबद्धं इत्यर्थः ) । अनेन नर्तक्या नृत्तारम्भोचितावस्थानविशेष उक्तः । तथा चोक्तं वसन्तराजीये—' अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ । आरम्भे सर्वनृत्तानामेतत्सामान्यमिष्यते ' ॥ इति ॥ उपगानं रागलाप्तिं ( गानात् प्राक् कर्तव्यं वसंतादिरागानुगतं स्वरविशेषं ' आलापाचारि ' इति ख्यातं ) कृत्वा । चतुष्पदवस्तु चतुष्पदसंज्ञकं प्रबन्धं गायति । वस्त्वि-

---

( १ ) P. G. B. °कान्तिवदनं. ( २ ) B. G. वंशयो. ( ३ ) T. अमितंच. ( ४ ) B. G. N. T. मनसि. ( ५ ) P. उपवहनं and A. कपोतकं. ( ६ ) N. चतुष्पदवस्तु and B. G. T. चतुष्पदवस्तुकं.

**दुल्लहो पिओ[1] तस्सिं भव हिअअ णिरासं**

**अह्मो[2] अपङ्गओ मे पं[3]फ्फुरइ किंपि वामो ।**

**एसो सो चिरदिट्ठो कहं[4] उवणेइदव्वो**

**णाह मं पराहीणं तुइ[6] गणअ सतिण्हम् ॥ ४ ॥** ( क )

( [7]इति यथारसमभिनयति । )

---

( क ) दुर्लभः प्रियस्तस्मिन्भव हृदयनिराश-
महो अपाङ्गो मे प्रस्फुरति किमपि वामः ।
एष स चिरदृष्टः कथमुपनेतव्यो
नाथ मां पराधीनां त्वयि गणय सतृष्णाम् ॥

---

ति प्रबन्धः । ' प्रबन्धो रूपकं वस्तु निबन्धस्याभिधात्रयम् ' इत्युक्तत्वात् । अहो ( अहह इत्यव्ययं हर्षे । एवमाशाया वैकल्यसंभावनायामपि ) अपाङ्गो मे परिस्फुरति किमपि ( किंचित् अनिर्दिष्टहेतोः ) वामः ( स्त्रीणां वामाक्षिस्पंदनं हि अभीष्टसमागमसूचकं तथा च पुनराशंसे प्रियसमागमो मे भावी । वामाक्षिस्फुरणात् तथाशंसे इति भावः ) । एष स चिरदृष्टः कथं पुनरुपनेतव्यः ( एवं आत्मनो दर्शनाभिलाषमभिधाय संकल्पोपनीतं नाथं संबोध्याह ) । नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम् ( एतच्च पद्यं चतुष्पदबद्धं प्रकृतार्थानुगुणं च एतदेव द्वारीकृत्य मालविकया आत्मानुरागो नृपे दर्शितस्तच्चाग्रे विदूषकवाक्ये स्फुटीभविष्यति । अत्र च चतुर्षु पादेषु चतस्त्रोऽवस्था वैराग्यौत्सुक्यसंकल्पात्मसमर्पणरूपा दर्शिताः) ॥ ततो गानानन्तरं यथारसं रसानुकूलमभिनयति । अत्र रसोऽयोगविप्रलम्भशृङ्गारः । यथोक्तम्—' अप्राप्तिर्विप्रलम्भः स्याद्यूनोर्जाताभिलाषयोः । विप्रलम्भस्य भेदाः स्युरयोगो विरहस्ततः ॥ प्रवासः शापः करुणा मानश्चेति च षण्मताः ॥ ' तत्र । ' संप्राप्तेः प्रागसङ्गो ( अभावो ) यस्तमयोगं प्रच-

---

( १ ) N. add मे. ( २ ) अम्महे. ( ३ ) N. परि for प. and B. G. T. फुरइ किंपि वामओ. ( ४ ) N. add उण. ( ५ ) T. उण दइवो. ( ६ ) N. add परि. ( ७ ) B. G. N. T. add ततः

**विदूषकः**—( जनान्तिकम् । ) भो[1] चउप्पदवत्थुअं[2] दुवारीकदुअ[3] तुइ उवट्ठाविदो[4] विअ[5] अप्पा तत्तहोदीए । ( क )

**राजा**—सखे एवम्[6]भावयोर्हृदयम् । अनया खलु

**जनमिममनुरक्तं विद्धि नाथेति गेये**
**वचनमभिनयन्त्याः स्वाङ्गनिर्देशपूर्वम् ।**

---

( क ) भोः चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित इवात्मा तत्र-भवत्या ।

---

क्षते ' इति । अत्र चतुष्पद्यां पादचतुष्टये क्रमेण निर्वेदः सविस्मयो हर्षश्चिन्ता दैन्यं चेति संचारि ( चिंतादि ) भावास्तत्तदनुभावैर्मुखरागादिभिः सम्यक्प्रकाशिता इत्यनुसंधेयम् । तेषां लक्षणमुक्तं वसन्तराजीये—' इष्टार्थविरहस्वाधिनिन्दापदवमाननैः । दारिद्र्यताडनाक्षेपपरवृद्ध्यवलेपनैः । निष्फलत्वमतिर्नृणां निर्वेदो भावितादिषु ॥ ' अत्र इष्टार्थविरहजनितो निर्वेदः । अन्तर्हर्षोद्गमध्याननिःश्वासस्वावमाननैः । दैन्यगद्गदवैस्वर्यैरभिनेयो भवेदयम् ॥ हर्षो मनःसमुल्लासो गुरुदेवमहीभुजाम् । प्रसादात्प्रियसङ्गाच्च भवेदिष्टार्थलाभतः ॥ ' अत्रेष्टार्थलाभजनितो हर्षः । अपाङ्गस्फुरणस्येष्टार्थलाभहेतुत्वात् । ' मुखनेत्रप्रसन्नत्वप्रियोक्तिपुलकोद्गमैः । दानत्यागपरीरम्भैरभिनेयो भवेदयम् ॥ इष्टालाभादिष्टनाशादनिष्टाप्तेश्च दैन्यतः । चित्तस्यैकाग्रता चिन्ता ॥ ' अत्र चिन्तेष्टालाभजनिता । ' स्मरणं चानुपस्मृतिः ॥ संतापोच्छ्वासनिश्वासा मान्द्यमिंद्रियकर्मणाम् । अधोमुखत्वमित्याद्यैरभिनेया भवेदियम् ॥ अनोजस्त्वं तु मनसो दैन्यमित्यभिधीयते । मनःसंतापदारिद्र्यचिन्तौत्सुक्यादिभिर्भवेत् ॥ ' अत्रौत्सुक्यजनितं दैन्यम् । ' अङ्गानामपि शैथिल्यं देहसंस्कारवर्जनम् । अश्वितं भरतेऽस्मिन्वै अनुभावाः प्रदर्शिताः ॥ ' इति ॥ **जनमिममित्यादि** । नाथ स्वामिन् इमं जनम् । मामित्य-

---

( १ ) B. G. T. add वअस्स. ( २ ) P. चउप्पदं वत्थुअं. ( ३ ) Po A. दुवारं करिअ. ( ४ ) B. G. N. T. उवक्खिदो. ( ५ ) N. om. ( ६ ) N. एवमेव ममापि.

प्रणयगतिमदृष्ट्वा धारिणीसंनिकर्षा

दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

( मालविका गीतान्ते गन्तुमिच्छति । )

**विदूषकः**—होदि चिट्ठ । किंचि वो विसुमरिदो कम्मभेदो । तं दाव पुच्छिस्सम् । (क)

**गण०**—वत्से स्थीयतामुपदेशविशुद्धौ यास्यसि ।

( मालविका निवृत्य स्थिता । )

**राजा**—( आत्मगतम् । ) अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति । तथा हि ।

---

(क) भवति तिष्ठ । किंचिद्वो विस्मृतः कर्मभेदः । तं तावत् प्रक्ष्यामि ।

---

र्थः । अनुरक्तं स्निग्धम् । त्वयीति शेषः । विद्धि जानीहि । इत्येवंविधे गेये गीते । वचनं ' णाह मं पराहीणं ' इत्यादि वाक्यं स्वाङ्गनिर्देशपर्वमात्मशरीरप्रदर्शनपूर्वं यथा भवति तथाभिनयन्त्या हस्तादिभिः प्रकाशीकुर्वत्या ( स्वांगंनिर्दिश्य इममित्युच्चारणकाले इदं पदार्थतया स्वस्यांगं निर्दिश्येत्यर्थः ) अनया मालविकया धारिणीसंनिकर्षाद्धेतोः प्रणयगतिं मम स्नेह प्रवृत्तिमदृष्ट्वाज्ञात्वा । अनुभावानामप्रकाशनादिति भावः । सुकुमारप्रार्थना व्याजं सुकुमारा मृदुला । रसनीयेत्यर्थः सा चासौ प्रार्थना सैव व्याजोऽपदेशो

---

( १ ) N. अपि for इव. (२) N. निष्क्रमितुं ( B. G. T. निष्क्रान्तुं ) आरब्धा. (३) N. चिट्ठ किंचि । वो &c; A. Po चिट्ठ । किंपि &c. ( ४ ) B. G. N. T. विसुमरिदो कम्मभेदो and A. Po विसुमरिदं कम्मभेदेण or ( some कम्मभेदेण ). ( ५ ) P. A. दाव after पुच्छिस्सम्. ( ६ ) B. G. T. वत्से क्षणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि, N. भद्रे उपदेशविशुद्धा यातुमर्हसि. ( ७ ) A. शुद्धौ. ( ८ ) B. G. T. om ( ९ ) स्वगतम्. ( १० ) सर्वावस्थासु. ( ११ ) P. शोभां ।

**वामं संधिस्तिमितवलयं न्यस्य हस्तं नितम्बे**
**कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।**
**पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं**
**नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥ ६ ॥**

**देवी**—णं गोदमवअणं वि अज्जो हिअए करेदि । ( क )

**गणदासः**—देवी[1] मैवम् । देवेप्रत्ययात्[2] संभाव्यते सूक्ष्मदर्शिता गौतमस्य । पश्य[3]

**मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।**
**पङ्कच्छिदः फलस्येव निकषेणा[4]विलं पयः ॥ ७ ॥**

---

( क ) ननु गौतमवचनमप्यार्यो हृदये करोति ।

---

यस्मिन्कर्मणि तथोक्तम् । अहमुक्त इवोदित इव ॥ **वाममित्यादि** । संधिस्तिमितवलयं संधौ मणिबन्धे स्तिमितं निश्चलं वलयं कङ्कणं यस्य स तथोक्तः । तं वामं सव्यं हस्तं नितम्बे न्यस्य निधाय । श्यामाविटपसदृशं फलिनीशाखासंनिभं द्वितीयं दक्षिणं हस्तं स्रस्तमुक्तं स्रस्तं शिथिलं यथा भवति तथा मुक्तं विसृष्टम् । लम्बितमित्यर्थः । कृत्वा विधाय । पादाङ्गुष्ठालुलितकुसुमे । पादाङ्गुष्ठेनालुलितमामृष्टं कुसुमं यस्य तत्तथोक्तं तस्मिन्कुट्टिमे । स्फटिकादिखचितस्थले पातिते व्यापारितेऽक्षिणी यस्मिन्कर्मणि तथोक्तम् । ऋज्वायतार्धम् । ऋजु अवक्रमायतं दीर्घं अर्धं शरीरस्योर्ध्वभागो यस्य तत्तथोक्तम् । अस्याः स्थितमवस्थानं नृत्तान्नर्तनादतितरामत्यर्थं कान्तं मनोहरं भवति ( अस्या नृत्यादनितराम् ऋजु सरलं आयतार्धं दीर्घार्धशरीरस्येत्यर्थात् कान्तं स्थितं । यद्वा पातितमाक्षि नेत्रमेवायतमर्धं यस्य तादृशं सत् कान्तं बभूवेत्यर्थः ) । अत्र वाक्यस्य विशेषितत्वात्पुष्पं नाम संध्यङ्गमुक्तं भवति ॥ **मन्दोऽप्यमन्दतामेतीति** । स्पष्टोऽर्थः । अस्य वाक्य-

---

( १ ) B. G. N. T. add मा. ( २ ) N. दैवप्रत्ययात्. ( ३ ) N. om. ( ४ ) G. निकर्षेण.

( विदूषकं विलोक्य । ) [१] शृणुमो[२] विवक्षितमार्यस्य ।

विदू०—( गणदासं विलोक्य ) सक्खिणीं दाव पुच्छ । पच्छा जो मए कम्मभेदो लक्खिदो तं भणिस्सं । ( क )

गणदा०—भगवति यथादृष्टमभिधीयताम् दोषो वा गुणो वा ।[६]

परिव्रा०—यथाशास्त्रं सर्वमनवद्यम् । कुतः ।

**अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः**
**पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।**
**शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ**
**भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ ८ ॥**

---

( क ) साक्षिणीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो लक्षितस्तं भणिष्यामि ।

---

स्योपपत्तिमत्वादुपन्यासो नाम संध्यङ्गमुक्तं भवति ॥ कौशिकीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणिष्यामि ॥ **अङ्गैरित्यादि** । अन्तर्निहितवचनैरन्तर्निहितान्यभ्यन्तरस्थापितानि वचनानि पदानि यैस्तैरङ्गैर्हस्तादिभिः ( वचनमंतरेणापि विक्षेपविशेषेण अन्तर्गतवचनैः ) । अत्राभ्यासपाठवादङ्गानां स्वत एवान्तर्निहितवचनत्वमुत्प्रेक्षितमिति मन्तव्यम् । अर्थो गीतार्थः सम्यक् साधु सूचितः प्रकाशितः । पादन्यासः पादस्य न्यासो विन्यासः । लयमनुगतोऽनुसृतः । लयो नाम तालमानम् । 'तालांतरालवर्ती यः कालोऽसौ लय ईरित' इत्युक्तत्वात् । अत्र पादन्यासस्य स्वतो लयानुसरणमभ्यासपाटवादिति मन्तव्यम् । रसेषु रसविषयेषु तन्मयत्वं तादात्म्यम् । रसात्मता भवतीत्यर्थः । अत्र रसशब्देनोपचारात्परितोषाति

---

(१) N. add ततः and B. G. T. तत्. (२) N. add वयं. (३) B. G. N. T. कोसिइं. ( or भिक्खुणीं ). (४) B. G. N. T. कम्मभेदो दिट्ठो. (५) B. G. N. T. गुणो वा दोषो वा. (६) B. G. T. add इति. (७) N. यथा दृष्टं and B. G. T. यथा दर्शितं. (८) B. G. T. तुदति.

**गण०**—देवः कथं [1] मन्यते ।

**राजा**—गणदास वयं स्वपक्षे [3] शिथिलाभिमानाः संवृत्ताः ।

**गण०**—अद्य [4] नर्तयितास्मि ।

**उपदेशं [2] विदुः शुद्धं सन्तस्तमुपदेशिनः ।**
**श्यामायते न युष्मासु [5] यः काञ्चनमिवाग्निषु ॥ ९ ॥**

**देवी**—दिट्ठिआ परिक्खआराहणेण [6] अज्जो वड्ढइ [7] । ( क )

---

( क ) दिष्ट्या परीक्षकाराधनेनार्यो वर्धते ।

---

शायवत्वादिभावाः कथ्यन्ते प्रकृतरसस्यैकत्वाद्रसेष्विति बहुवचनानुपपत्ति-प्रसङ्गात् । अभिनयः प्रयोगः । यथोक्तम्—' प्रयोगो यस्तु नाट्यादेर्भवेद-भिनयो हि सः ' इति । शाखायोनिः शाखा योनिः प्रभवो यस्य स तथो-क्तस्तथाविधः सन् ( शाखातुल्यपाणिरेव योनिरुत्पत्तिसाधनं यस्य हस्ताश्रित इत्यर्थः ) । मृदुः सुकुमारः । शाखानाम नृत्तहस्तानां मानप्रचारः । यथोक्तम्—' शाखा तु नृत्तहस्तानां या मात्रा चितनर्तने ' इति । तद्वि-कल्पानुवृत्तौ । तस्याभिनयस्य ( तस्य अभिनेयनायकादेर्विकल्प्यन्ते इति विकल्पाः देहादिचेष्टादयस्तेषामनुवृत्तौ अनुसरणे भावस्तद्गतोऽ-वस्थाभेदः स एव अभिनेयनायकादिगत एव रागबन्धोऽनुरागसंबंधो विषयादन्यस्मादिति शेषः । भावं हृदयं तुदति आकर्षति । विषयान्तर-संसर्गराहित्येन स्वप्रवणं करोतीत्यर्थः ) विकल्पो भेदस्तस्यानुवृत्तिरनुगतिः प्राप्तिः । तस्यां सत्यां भावः । अभिनीयमानो निर्वेदादिर्विषयादाश्रयात् । प्रकृतात्स्थायिन इत्यर्थः । भावं पूर्वाभिनीतं संचारिणं नुदत्यपाकरोति । रागबन्धो रञ्जनत्वयोगः स एव । पूर्वं यादृशस्तादृश एवेत्यर्थः ॥ **उपदेशं विदुरित्यादि** । उपदेशिनः शिक्षकस्य युष्मासु युष्मादृशेषु विवेकि

---

( १ ) N- add वा. ( २ ) B. G. N. T. om. ( ३ ) N. स्वपक्षे &c. ( ४ ) Po अथ. ( ५ ) T. विद्वत्सु. ( ६ ) T. परिक्खारा &c. ( परी-क्षारा &c. ) ( ७ ) T. वड्ढदु ( वर्धताम् ).

**गण०**—देवीपरिग्रहश्च मे[1] वृद्धिहेतुः । ( विदूषकं विलोक्य । ) गौतम वदेदानीं यत्ते मनसि वर्तते ।

**विदू०**—पुढमोपदेसदंसणे पुढमं बह्मणस्स पूजा इच्छिदव्वा[2] । सा उण[3] वो विसुमरिदा । ( क )

**परि०**—अहो प्रयोगाभ्यन्तरः प्रश्नः[4] ।[5]

( सर्वे प्रहसिताः[6] । )

( मालविका च[7] स्मितं करोति । )

**राजा**—( आत्मगतम्[8] । ) आत्तसारश्चक्षुषां[9] स्वविषयः । यदनेन

**स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् ।**
**असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥**

---

( क ) प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा एष्टव्या । सा पुनर्वो विस्मृता ।

---

ष्वित्यर्थः । न श्यामायते न मलिनीभवति । ' लोहितादिडाज्भ्यः क्यष् ' । ' वा क्यषः ' इति विकल्पादात्मनेपदम् ॥ अयि पण्डितंमन्ये किमन्यत् । मोदकखण्डनेऽपि असमर्था किं जानासि । प्रसन्नचन्द्रपादसदृशैः केशपाशैरेतान् भीषयसि । प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा एष्टव्या सा त्वया विस्मृता । अत्र परिहासस्य गम्यमानत्वान्नर्मेति संध्यङ्गमुक्तं भवति ॥ **स्मयमानमित्यादि** । स्पष्टोऽर्थः ॥ अथवा पण्डितपरितोषप्रत्यया ननु

---

( १ ) N. एव &c. B. G. T. अपि for च मे. ( २ ) B. G. N. T. A. कादव्वा. ( ३ ) B. G. N. T. णं & A. ण वोपलक्खिदा. ( ४ ) P. A. प्राश्निकः ( ५ ) Pn add. विदूषकः—अइ पण्डितं मण्णे किं अण्णं । मोदअखण्डणे वि असमत्था तुमं किं जाणासि । पसण्णचन्दपादसरिसेहिं केसपासेहिं एदाणं भीसिअसि. ( ६ ) B. G. हसिताः ( ७ ) N. om. ( ८ ) B. G. T. स्वगतम्. ( ९ ) B. G. N. T. उपात्तसारः ( १० ) N. T. add मे.

**गण०**—महाब्राह्मण न खलु[1] नेपथ्यसंगीतकमिदम्। अन्यथा कथं त्वामर्चनीयं[2] नार्चयिष्यामः।

**विदू०**—मए णाम मुद्धचादएण विअ सुक्खघणगज्जिदे अन्तारिक्खे जलपाणं इच्छिदं[3]। (क)

**परिव्रा०**—एवमेव

**विदू०**—तेण हि पण्डिदपरितोसपच्चया[4][5]मूढजादी। जदि अंत्तहोदीए[6] सोहणं भणिदं[7] तदो से इमं पारितोसिअं पअच्छामि। (इति[8] राज्ञो हस्तात्कटकमाकर्षति।) (ख)

**देवी०**—चिट्ठ दाव। गुणन्तरं अजाणन्तो किंति[9][10] तुमं आहरणं देसि। (ग)

**विदू०**—परकेरअं[11] त्ति करिअ। (घ)

---

(क) मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिष्टम्।

(ख) तेनाहि पण्डितपरितोषप्रत्यया मूढजातिः। यतोऽत्रभवत्या शोभनं भणितं ततोऽस्यै इदं पारितोषिकं प्रयच्छामि।

(ग) तिष्ठ तावत्। गुणान्तरमजानन्किमिति त्वमाभरणं ददासि।

(घ) परकीयमिति कृत्वा।

---

मूढजातिः। अनेन मालविकानिर्गमनहेतुना देवीवचनेन राज्ञो हितरोधनान्नि-

---

(१) P. B. G. (T. प्रथम) नेपथ्यसवनमिदम्, and N. प्रथम नेपथ्यप्रदर्शनमिदम्. (२) B. G. T. दक्षिणीयं. (३) B. G. T. जलपाणेण (T. or जलपाणं इच्छदा) चादआइत्तं. N. reads the following speech of विदूषक in continuation with this omitting the speech of परिव्राजिका and reading अहवा for तेणहि. (४) N. संतोसप. (५) B. G. N. T. add णं. (६) Po तत्थहोदीए. (७) Po गेण्हिदं. (८) B. G. om. (९) B. G. N. T. A. Po. om. (१०) B. G. N. T. किंणिमित्तं. (११) A. Po परकीअं.

**देवी**—( आचार्यं विलोक्य । ) अज्ज गणदास णं[1] दंसिदोवदेसा दे सिस्सा । ( क )

**गण०**—वत्से प्रतिष्ठस्वेदानीम्[2] ।

( मालविका सहाचार्येण निष्क्रान्ता । )

**विदू०**—( जनान्तिकम् । राजानं[3] विलोक्य[4] ) एत्तिओ मे मदिविहवो भवन्तं सेविदुं । ( ख )

**राजा०**—अलमलं परिच्छेदेन । अयं[5] हि

**भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।**
**द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणम्[6] ॥ ११ ॥**

**विदू०**—( जनान्तिकम्[7] ।) साहु[8] तुमं दलिद्दादुरो[9] विअ वेज्जेण[10] उवणीअमाणं ओसहं इच्छसि । ( ग )

---

( क ) आर्य गणदास ननु दर्शितोपदेशा ते शिष्या ।

( ख ) एतावान्मे मतिविभवो भवन्तं सेवितुम् ।

( ग ) साधु त्वं दरिद्रातुर इव वैद्येनोपनीयमानमौषधमिच्छसि ।

---

रोधो नाम संध्यङ्गमुक्तं भवति ॥ **भाग्यास्तमयमित्यादि** । तस्या मालविकायास्तिरस्करणं तिरोधानमक्ष्णोर्नेत्रयोर्भाग्यास्तमयमिव भाग्यस्य भागधेयस्यास्तमयमिव । हृदयस्य मनसो महोत्सवस्यावसानमन्तमिव । धृतेः प्रीतेर्द्वारपिधानमिव द्वारस्य प्रवेशमार्गस्य पिधानं तिरोधानमिव । मन्ये संभावयामि ( तस्या अदर्शने नेत्रं विफलमिव हृदयं निरानन्दमिव संतोषमावृतमिव च मन्ये ) अत्रारतेर्गम्यमानत्वाद्विधूतं नाम संध्यङ्गमुक्तं भवति ॥ दरिद्र इवातुरो वैद्येनदीयमानमौषधमि-

---

( १ ) N. Pn om. ( २ ) B. G. T. एहि गच्छाव: ( ३ ) B. G. T. om. ( ४ ) A. om मादि. ( ५ ) B. G. N. T. अहं. ( ६ ) P. B. G. T. तिरस्कारिणीम. ( ७ ) A. Po om. ( ८ ) B. G. T. साहु. N. om & A. add अहह. before ( ९ ) N. दलिद्दो विअ आदुरो. (१०) B. G. N. T. वेज्जेण ओसहं दीअमाणं ( B. G. T. उप्पादिअमाणं ).

( प्रविश्य )

**हर०**—देव मदीयमिदानीमवलोकयितुं प्रयोगं क्रियतां प्रसादः ।

**राजा**—(आत्मगतम् ।[2] ) अवसितो[3] दर्शनार्थः ( दाक्षिण्यमवलम्ब्य । प्रकाशम् । ) हरदत्त पर्युत्सुका एव वयम् ।

**हर०**—अनुगृहीतोऽस्मि ।

( नेपथ्ये । )

**वैता०**—जयतु जयतु[5] देवः । उपारूढो मध्याह्नः[6] । तथा हि ।

**पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां**
**सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।**
**बिन्दूत्क्षेपान्[7] पिपासुः परिपतति[8] शिखी भ्रान्तिमद्वारियन्त्रं**
**सर्वैरुस्रैः समग्रैस्[9]त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥**

---

च्छसि ॥ **पत्रच्छायेत्यादि** ( हंसा दीर्घिकापद्मिनीनां वापीसरोजिनीनां-दलच्छायासु मुकुलितनयनाः संत आसते इति शेषः । सौधानि अत्यर्थ तापाद्रविकिरणात्यर्थसंसर्गकृततापाद्वलभिपरिचये वडभ्यनुशीलने द्वेषिणो द्वेषयुक्ता अननुरक्ताः पारावता यत्र तथा भूतानि । शिखी मयूरः पिपासुः सन् बिन्दूत्क्षेपाज्जलकणानामुत्क्षेपाद् भ्रांतिमद् भ्रमणयुक्तं जलयंत्रं धारायंत्रं परिसरति गच्छति । हे नृप सप्तसप्तिः सूर्यः गुणैः समग्रः संपूर्णस्त्वमिव उस्रैः किरणैः समग्रः सन् दीप्यते भाति । ) ॥ अविध अविध । अस्माकं पुनर्भोजनवेलोपस्थिता । उचित वेलातिक्रमे

---

( १ ) B. G. N. T. Interchange. ( २ ) B. G. T. स्वगतम्. ( ३ ) B. G. T. add मे. ( ४ ) B. G. T. om. ( ५ ) P. om. one जयतु. an । A. सुखाय भवतु माध्यंदिनी संध्या देवस्य । तथाहि ।. ( ६ ) Po मध्यमह्नः; मध्यः ( ७ ) T. Po बिन्दूत्क्षेपात् & A. बिन्दूत्क्षेपान्. ( ८ ) B. G. N. T. परिसरति. ( ९ ) B. G. N. T समग्रः

**विदू०**—अविहा अविहा[1] । अह्माणं उण भोअणवेला संउत्ता[2] । उइदवेलादिक्कमे चिइच्छआ दोसं उदाहरन्ति ।[3] ( क )

**राजा**—हरदत्त किं भणसि ।

**हर०**—नास्त्यवकाशो[4] मद्वचनस्य ।

**राजा**—( हरदत्तं विलोक्य[5] ) तेन हि त्वदीयमुपदेशं श्वो वयं[6] द्रक्ष्यामः । विश्राम्यतु[7] भवान् ।

**हर०**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**देवी**—णिव्वट्टेदु अज्जउत्तो[8] मज्झेणविहिम्[9] । ( ख )

**विदू०**—भोदि विसेसेण पाणंभोअणं[10] तुवरेदु[11] ( ग )

---

( क ) अविध अविध । अस्माकं पुनर्भोजनवेलोपस्थिता । उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति ।

( ख ) निर्वर्तयत्वार्यपुत्रो मध्याह्नविधिम् ।

( ग ) भवति विशेषेण पानभोजनं त्वरयतु ।

---

चिकित्सका दोषमुदाहरन्ति । किमिदानीं भणसि ( अत्र मध्याह्नपमये अन्यस्य वचनस्यावकाशोस्तीति काक्का प्रश्नः ) ॥ निर्वर्तयत्वार्यपुत्रो म-

---

(१) B. G. om. one अविहा. (२) Po read अत्तहोदो with संउत्ता, Pn बह्मणस्स भोअणवेला । अत्तहोदो संउत्ता । उइद &c. and B. G. T. अह्माणं भोअणवेला । अत्तहोदो उइदवेलादिक्कमेण &c. A. ण्हाणभोअणवेला उवट्ठिदा । अत्तहोदो उइद &c. ( ३ ) B. G. N. T. read the folling speech of tne king with this, omitting राजा. N. adds (हरदत्तं विलोक्य ) & दाणिं after किं. ( ४ ) Pn नास्तिमद्वचनावसरोऽत्र B. G. T. नास्तिचान्यस्य वचनावकोशोऽत्र & N. नास्तिवचनस्यान्यस्यावकाशोऽत्र. ( ५ ) N. om. ( ६ ) B. G. T. om. ( ७ ) B. G. T. विरम्यताम भवान्. ( ८ ) Pn अज्जो. ( ९ ) Pn मज्जण. ( १० ) Pn om पाण. ( ११ ) B. G. N. T. तुवरावेदु.

**परिव्रा०**—( उत्थाय । ) स्वस्ति भवते । ( सपरिजनया[1] देव्या सह निष्क्रान्ता । )

**विदू०**—भो[2] ण केवलं रूवे सिप्पे वि[3] अदुदीआ मालविआ ( क )

**राजा**—वयस्य

**अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।**
**परि[4]कल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ १३ ॥**

किं बहुना । [5]चिन्तयितव्योऽस्मि ते[6] ।

**विदू०**—भवदा वि अहं । दिढं[7] विपणिकन्दु विअ मे उदरब्भन्तरं[8] डज्झइ । ( ख )

**राजा**—एवमेव भवान्सुहृदर्थे[9] त्वरताम्[10] ।

**विदू०**—[11]गहीदक्खणो ह्मि । किंदु मेहोवरुध्द[12]जोण्हा विअ पराहीण-

---

( क ) भो न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका ।

( ख ) भवताप्यहम् । दृढं विपणिकन्दुरिव म उदरभ्यन्तरं दह्यते ।

---

ज्जनविधिम् ॥ **अव्याजसुन्दरीमित्यादि** । ललितेन सुभगेन विज्ञानेन संगीतकलापरिज्ञानेन ॥ विपणिकन्दुर्नाम पण्यवीथिकायां पिष्टपचनपात्रम् । ' कन्दुर्ना स्वेदनी स्त्रियाम् ' इत्यमरः ॥ **एवमेवेत्यादि** । एवमेवेत्थमेव । यथा भवान्भोजनरूपे स्वकार्ये त्वरते तथा सुहृदर्थे मदर्थे मालविकापुनर्दर्शने त्वरताम् । अत्र दृष्टनष्टस्य बीजस्यानुपसर्पणात्परिसर्प इति संध्यङ्गमुक्तं भवति ॥ भवानपि सूनाविहङ्ग ( सूनापरिसरचरो विहङ्ग ) इव आमिषलोलुपो

---

( १ ) B. G. T. (इति देव्या सह &c. ), N. ( इति सपरिजनया देव्या &c. ) ( २ ) N. add. वअस्स. ( ३ ) A सिप्पे अ. ( ४ ) B. G. T. उपकल्पितो. ( ५ ) N. add सखे. ( ६ ) Po. om ते. ( ७ ) Po om. ( ८ ) B. G. T. हिअअ°. ( ९ ) B G. T. अस्मदर्थे, and N. and अपि. ( १० ) त्वरयतु. ( ११ ) N. गहीदो क्खणो. ( १२ ) B. G. N. T. मेहावलीरुद्ध ( N. रुद्धा ) जोण्हा & add मालविआ after तत्तहोदी.

दंसणा तत्तहोदी । भवं वि सूणो[1]परिचरो [2]विहंगमो विअ आमिसलोलुवो भीरुओ अ[3] अ[4]च्चादुरो भविअ कज्जसिद्धिं पत्थयन्तो मे रोअसि ।

**राजा**—स[5]खे कथं नातु[6]रो भविष्यामि ।

**सर्वान्तःपुरवनिता व्यापा[7]रप्रतिनिवृत्तहृदयस्य ।**
**सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥**

( इति निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः

---

( ग ) गृहीतक्षणोऽस्मि । किंतु मेघोपरुद्धज्योत्स्नेव पराधीनदर्शना तत्रभवती । भवानपि शूनोपरिचरो विहङ्गम इव आमिषलोलुपो भीरुकश्चात्यातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे ।

---

भीरुकश्च । तस्मादनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे । अत्र सान्त्वनस्य गम्यमानत्वात्पर्युपासनं नाम संध्यङ्गमुक्तं भवति ॥ **सर्वान्तः पुरेत्यादि** । या स्नेहस्य प्रेम्ण एकायनीभूता । एकं केवलमयनं स्थानम् । आश्रय इत्यर्थः । तद्भूता । अत्राङ्के मालविकाया निष्क्रमणेन कथाविच्छेदे सति सर्वान्तःपुरेत्यादिना गम्यमानो राज्ञोऽभिलाषातिशय उत्तराङ्ककथाहेतुत्वाद्बिन्दुरित्यनुसंधेयम् ॥ इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने द्वितीयोऽङ्कः ॥

---

( १ ) B. G. N. T. सूणापरिचरो ( N. सरो ). ( २ ) B. G. T. गिद्धो विअ and N. विहंगो विअ. ( ३ ) B. G. N. T. sentence compete here ( ४ ) B. G. T. अच्चादुरो विअ &c. N. ता अणादुरो. ( ५ ) B. G. N. T. om. ( ६ ) B. G. N. T. कथमनातुरो. ( ७ ) B. G. T. °व्यापारं प्रति &c.

## तृतीयोऽङ्कः ।

( ततः प्रविशति परिव्राजिकायाः परिचारिका । )

**परिचा०**—आणत्तह्मि भअवदीए समाहिमदिए[1] देवीए[2] उवाण-अत्थं बीजपूरअं गेण्हिअ आअच्छेत्ति । ता जाव पमदवणपालिअं महु-अरिअं अण्णेसामि । ( परिक्रम्यावलोक्य च । ) एसा तवणीआसोअं ओलोअन्ती चिट्ठदि । जाव णं उपसप्पामि । ( क )

( ततः प्रविशत्युद्यानपालिका )

**प्रथमा**—( उपसृत्य ) महुअरिए अवि सुहो दे उज्जाणवण्णव्वावारो । ( ख )

**द्वितीया**—अह्मो समाहिमदिआ । साहि साअदं ते । ( ग )

---

( क ) आज्ञप्तास्मि भगवत्या समाधिमतिके देव्या उपायनार्थं बीजपूरकं गृहीत्वागच्छेति । तद्यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती तिष्ठति । यावदेनामुपसर्पामि ।

( ख ) मधुकरिके अपि सुखस्त उद्यानवनव्यापारः ।

( ग ) अहो समाधिमतिका । सखि स्वागतं ते ।

---

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति **ततः प्रविशतीत्यादिना** । समाभृतिके (देव्याः) उपा-

---

( १ ) N. T. add समाहितिका. ( २ ) B. G. N. T. समाहितिका A. समाभृतिका all through. ( ३ ) Po. add जहा समाहिमदिए. Pn om. समाहिमदिए. ( ४ ) B. G. N. T. Po देवस्स; Pn om. ( ५ ) A. Po समाअणत्थं. ( ६ ) B. T. ता दाव, N. जाव & G. तं दाव. ( ७ ) N. om च. ( ८ ) B. G. T. A. Po. add महुअरिआ. ( ९ ) B. G. A. P. T. संभावेमि. ( १० ) B. G. T. आलि for महु, .. अवि ( T. अपि ). ( ११ ) A. सुविहिदो. ( १२ ) Pn AN. उज्जाणव्वावारो.

**समाधिमतिका**—हला भअवदी आणवेदि । अरित्तपाणिणा अह्मा-रिसजणेण तत्तहोदी[1] देवी[1] दक्खिदव्वा । ता बीजपूरएण सुस्सूसिदुं[2] इच्छामि त्ति । (क)

**मधुकरिका**—णं संणिहिदं बीजपूरअं । कहेहि दाव[3] अण्णोण्णसंघ-रिसिदाणं णट्टाअरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो-त्ति[4] । ( ख )

**समाधिमतिका**—दुवे वि किल[5] आअमिणा पओअणिउणा अ । किंदु सिस्सागुणविसेसेण उण्णमिदो[6] गणदासो । ( ग )

**मधुकरिका**—अह मालविआगअं कोलीणं किं[7] सुणीअदि । ( घ )

**समाधिमतिका**—बलिअं[8] क्खु साहिलासो तस्सि[9] भट्टा । [10]केवलं

---

( क ) सखि भगवत्याज्ञापयति । अरिक्तपाणिनास्मादृशजनेन तत्र-भवती देवी द्रष्टव्या । तद्बीजपूरकेण शुश्रूषितुमिच्छामीति ।

( ख ) ननु संनिहितं बीजपूरकम् । कथय तावदन्योन्यसंघर्षितयो र्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ।

( ग ) द्वावपि किलागामिनौ प्रयोगनिपुणौ च । किंतु शिष्यागुणविशे-षेणोन्नमितो गणदासः ।

( घ ) अथ मालविकागतं कौलीनं किं श्रूयते ।

---

यनार्थं बीजपूरकं गृहीत्वागच्छेति । अथ मालविकागतं कौलीनं लोकवार्ता किमिति श्रूयते । (देव्या रक्ष्यतेच । ) ततः परं न जाने ॥इति प्रवेशकः॥

---

( १ ) A. B. G. T. Po अत्तभवं दक्खिदव्वो. (२) T. पेक्खेदुं ( सुस्सू-सिदुं ). (३) B. G. T. om and Po A. दुवेणं सगीदओवदेसणिमित्तं &c. ( ४ ) B. G. N. T. om. त्ति ( ५ ) T. ( क्खु alternative ). ( ६ ) N. मालविआए उवदेसो पसंसिदो, T. ( सिस्साए विसेसेण उण्णमिदो उवदे-सो गणदासस्स. &. P. A. गणदासो उण्णमिदोवदेसो. ( ७ ) A. N. Po. किंति. ( ८ ) N. दढ किल. and B. G. T. बाढं किल. ( ९ ) B. G. N. T. Interchange. ( १० ) N. add किंतु.

देवीएं धारिणीए चित्तं रक्खन्तो [3]पहुत्तणं ण दंसेदि । मालविआ वि इमेसु दिअहेसु अणुहूदमुत्ता विअ मालदीमाला मिलाअमाणा लक्खीअदि । अदो वरं ण जाणे । विसज्जेहि मं । ( क )

**मधुकरिका**—एदं साहावलम्बिदं बीजपूरअं गेण्ह । ( ख )

**समाधिमतिका**—( नाट्येन गृहीत्वा । ) हला तुमं वि इदो पेसलदरं साहुजणसुस्सूसाए फलं अणुहविस्ससि । ( इति प्रस्थिता । ) ( ग )

**मधुकरिका**— सहि समं एव्वं गच्छह्मो । अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए विण्णवेमि । ( घ )

**समाधिमतिका**—जुज्जइ । अहिआरो क्खु तुह । ( च )

( इति निष्क्रान्ते )

[17] प्रवेशकः

---

( क ) बलवत्खलु साभिलाषो तस्यां भर्ता । केवलं देव्या धारिण्याश्चित्तं रक्षन् प्रभुत्वं न दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लायमाना लक्ष्यते । अतः परं न जाने । विसृज माम् ।

( ख ) एतच्छाखावलंबितं बीजपूरकं गृहाण ।

( ग ) हला त्वमपीतः पेशलतरं साधुजनशुश्रुषायाः फलमनुभवसि ।

( घ ) सखि सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै विज्ञापयामि ।

( च ) युज्यते । अधिकारः खलु तव ।

---

( १ ) N. om. ( २ ) Pn रक्खमाणो, Po A. रक्खिदु. ( ३ ) B. G. T. add अत्तणो and A. Po अहिलासदंसणे. &c. ( ४ ) T. अणुहूदमूच्छा. ( ५ ) N. म्लाना. ( ६ ) B. G. T. अवरं. ( ७ ) B. G. T. साहावलंबि, and A. एणं साहावलंबिणं. ( ८ ) N. तह । ( इति नाट्येन बीजपूरकं गृहीत्वा ). ( ९ ) N. अदो & A. om; Pn. अदो वरं. ( १० ) Po विपुलदरं & Pn om. ( ११ ) B. G. N. T. पावेहि and Po A. लहेहि. ( १२ ) N. हला. ( १३ ) B. G. om. ( १४ ) A. °कुसुमस्स. ( १५ ) B. G. T. णिवेदेमि. ( १६ ) A. om. ( १७ ) N. add इति.

( ततः प्रविशति कामयमानावस्था राजा विदूषकश्च )

**राजा**—( आत्मानं विलोक्य )

**शरीरं क्षामं[1] स्यादसति दयितालिङ्गनसुखे**
**भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।**
**तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं**
**प्रसक्ते निर्वाणे हृदय परितापं वहसि किम् ॥ १ ॥**

**विदू॰**—अलं भवदो धीरदं उज्झिअ परिदेविदेण । दिट्ठा क्खु[3] मए तत्तहोदीए मालविआए पिअसही बउलावलिआ । सुणाविदा अ तं-अत्थं जो[5] भवदा[4] संदिट्ठो । ( क )

**राजा**—ततः किमुक्तवती ।

---

( क ) अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा खलु मया तत्र-भवत्या मालविकायाः प्रियसखी बकुलावलिका । श्राविता च तमर्थं यो-भवता संदिष्टः ।

---

**ततः प्रविशतीत्यादि** । कामयमानावस्थः । कामयमानानां कामिनामवस्थेवाव-स्था दशा यस्य स तथोक्तः । **शरीरमित्यादि** । दयितालिङ्गनसुखे प्रि-यापरिष्वङ्गसुखे ऽसत्यविद्यमाने ( सति ) शरीरं वपुः क्षामं स्यात्कृशं भवेत् ( संभावनायां लिङ् । शरीरक्षामता संभावितैवेत्यर्थः । अनेन स्मरजा कृ-शावस्था सूचिता । तथा चालिङ्गनसुखविमुक्तस्य कृशतोचितैवेत्यर्थः । ) । क्षणमपि क्षणमात्रमपि सा मालविका न दृश्यत इति न लक्ष्यत इति चक्षुः सास्रं सबाष्पं भवेत्स्यात् । हे हृदय चित्त सारङ्गाक्ष्या हरिणनेत्रया तया

---

( १ ) B. G. मंदं. ( २ ) B. G. N. T. वजसि. ( ३ ) B. G. N. T. om. क्खु. ( ४ ) B. G. T. om त, N. सुणाविदो अअं अत्थो for अ तं अत्थं and Pn. मए for तं अत्थं. ( ५ ) Po. interchange.

**विदू०**—विण्णवेहि भट्टारं[1] । अणुगहीदह्मि इमिणा णिओएण । किंदु सा तवस्सिणी देवीए अहिअदरं[2] रक्खिअमाणा णाअरक्खिदो[3] णिहि विअ ण सुहं समासादइदव्वा । तहवि घडइस्सं त्ति । ( क )

**राजा**—भगवन्संकल्पयोने प्रतिबन्धवत्स्वेपि[5] विषयेष्वभिनिवेश्यं[6] तथा प्रहरसि यथा जनोऽयं कालान्तरक्षमो[7] न भवति । (सविस्मयम् )

**क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम् ।**
**मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥ २ ॥**

---

( क ) विज्ञापय भर्तारम् । अनुगृहीतास्म्यनेन नियोगेन । किं तु सा तपस्विनी देव्याधिकतरं रक्ष्यमाणा नागरक्षितो निधिरिव न सुखं समासादयितव्या । तथापि घटयिष्यामीति ।

---

मालविकया कदाचिज्जातु विरहितं वियुक्तं नासि न भवसि ( मनसस्तदेकायनत्वात् ) । अतस्तस्मात्कारणात् ( तन्मयत्वेन ) निर्वाणे सुखे प्रसक्ते प्रस्तुते सति किं किमर्थं परितापं संतापं व्रजसि प्राप्नोषि ( अनुभवसि ) । श्राविता च तमर्थो यो भवता संदिष्टः । ( श्राविता च मया यद्भवता संदिष्टं ) नागरक्षित इव निधिः । अत्र तपस्विनीति करुणापात्रमुच्यते । ' तपस्वी करुणापात्रम् ' इति हलायुधः । अत्र प्राप्तिसंभावनया प्राप्त्याशा नाम तृतीयावस्था सूचिता । अनया प्राप्त्याशया बिन्दोः समन्वयाद्गर्भसंधिरिति मन्तव्यम् । **क्वरुजेत्यादि** । ( हृदयप्रमाथिनी हृदयनिष्पीडिका रुजा रोगः क्व । ते विश्वसनीयं कुसुमायुधत्वेन अपीडाकरत्वात् विश्वासपात्रमायुधं शस्त्रं वा क्व । कुसुमशस्त्रेण भवता हृदयस्य पीडनं अतीवासम्भवमित्यर्थः । हे मन्मथ लोके मृदु कोमलं सदेव तीक्ष्णतरमतितीक्ष्णं यदुच्यते

---

( १ ) N. om. and B. G. T. भट्टारअं. ( २ ) N. अहिअं रक्खंतीए. ( ३ ) B G. T. रक्खिदाणं विअ णिहिणं सुहं &c., A. N. विअ मणी and P. मणि विअ. ( ४ ) B. G. T. जतिस्सं. ( ५ ) N. प्रतिबन्धवत्सुचापि &. A. B. G. om. चापि. ( ६ ) N. अभिनिवेशकारी कि. ( ७ ) B. G. N. T. interchange.

**विदू०**—णं भणामि तस्सिं साहणिज्जे किदो उवक्खेओ त्ति । तो पज्जवत्थावेदु भवं अत्ताणं । ( क )

**राजा**—अथेमं दिवसशेषमुचितव्यापारपराङ्मुखेन चेतसा क्व नु खलु यापयामि ।

**विदू०**—अज्ज एव्व वसन्दपुढमावदारसुहआणि रत्तकुरबआणि उवाअणं पेसिअ णववसन्तावदारावदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं । इच्छामि अज्जउत्तेण सह दोलाहिरोहणं अणुहविदुं त्ति । भवदा वि से पडिण्णादं । ता पमदवणं एव्व गच्छह्म । ( ख )

**राजा**—न क्षममिदम् ।

**विदू०**—कहं विअ । ( ग )

---

( क ) ननु भणामि तस्मिन्साधनीये कृतो मयोपक्षेप इति । तत्पर्यवस्थापयतु भवानात्मानम् ।

( ख ) अद्यैव वसन्तप्रथमावतारसुभगानि रक्तकुरबकाण्युपायनं प्रेष्य नववसन्तावतारापदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान् । इच्छाम्यार्यपुत्रेणसह दोलाधिरोहणमनुभावितुमिति । भवताप्यस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छावः ।

( ग ) कथमिव ।

---

ततिदं त्वयि दृश्यते । तव शस्त्रस्य मृदुत्वात् तापकत्वाच्च तथात्वमिति भावः । ) ननु भणामि तस्मिन्साधनीये कृत उपक्षेप इति । (संस्तंभयतु) ।

---

(१) A. B. G. T. add कज्जे. (२) N. A. om. त्ति, A. Po उवाओवक्खेओ त्ति (A. om. त्ति); T. मए उवाओवक्खेओ त्ति; B. G. मए उवाओ त्ति. ( ३ ) N. om. ता, B. G. अत्तभवं, A. Po अत्ताणं तत्तभवं. ( ४ ) B. G. om. उचित. ( ५ ) B. G. N. T. त्रि for परा. ( ६ ) B. G. N. T. om. ( ७ ) B. G. N. T. add णं भव. ( ८ ) B. G. N. T. om. वसन्द ( ९ ) P. A. सूअआणि. ( १० ) B. G. N. T. °व्ववदेसेण. &c. ( ११ ) B. G. N. T. om.

**राजा**—वयस्य निसर्गनिपुणाः स्त्रियः। कथं मामन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति। अतः पश्यामि।

**उचितः प्रणयो वरं विहन्तुं बहवः खण्डनहेतवो हि दृष्टाः।**
**उपचारविधिर्मनस्विनीनां न तु पूर्वाभ्यधिकोऽपि भावशून्यः॥३॥**

**विदू०**—णारुहदि भवं अन्तेउरपडिट्ठिदं दक्खिणं एक्कपदे पिट्ठदो कादुम्। (क)

**राजा**—(विचिन्त्य) तेन हि प्रमदवनमार्गमादेशय।

**विदू०**—इदो इदो भवं। (ख)

(उभौ परिक्रामतः)

---

(क) नार्हति भवानन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम्।

(ख) इत इतो भवान्।

---

अत्र 'कृत उपक्षेपः' इत्यनेन कपटोपायकल्पनाया गम्यमानत्वेन अभूताहरणं नाम सन्ध्यङ्गमुक्तं भवति। (निसर्गेण स्वभावेन निपुणाः परचित्तज्ञानदक्षा अन्यस्यां संक्रान्तं हृदयं यस्य। वृत्तिगतत्वात् अन्याशब्दस्य पुंवद्भावः। तादृशं मामुपलालयन्तं बाह्यव्यापारेण आनुकूल्यमाचरन्तं ते तव सखी इरावती लक्षयिष्यति।) **उचित इति**। प्रणय इरावत्याः प्रार्थना विहन्तुं प्रतिषेद्धुमुचितोऽर्हो वरं मनाक्प्रियम्। अयं पक्षः किंचित्साधुरित्यर्थः। हि यस्मात्कारणात्खंडनहेतवः (अभिमताननुष्ठानरूपस्य प्रणयखंडनस्य हेतवः) ईर्ष्याकोपकारणानि बहवोऽनेके दृष्टा मया लक्षिताः (कल्पयितुं शक्या इत्यर्थः)। खंडनहेतुदर्शनेऽप्युपचारविशेषैः प्रलोभ्यतामित्यत आह। **उपचारेति**। भावशून्यः प्रेमरहित उपचारविधिरिष्टाचरणं पूर्वाभ्यधिकोऽपि पूर्वस्मादुपचारविधेरतिशयितोऽपि मनस्विनीनां

---

(१) B. G. N. T. om पडि. (२) A. राजा निष्क्रामति.

**विदू०**——वसन्दो किल एदाहिं पवणचलिदाहिं पल्लवङ्गुलीहिं तुवरेदि विअ भवन्तं एदं पमदवणं पविसेदि । ( क )

**राजा**——( स्पर्शं रूपयित्वा । ) अभिजातः खलु वसन्तः । सखे पश्य ।

**आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानां**
**सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।**
**अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे**
**सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥**

**विदू०**——पविस णिव्वुदिलाहाअ । ( ख )

( उभौ प्रविशतः )

---

( क ) वसन्तः किलैताभिः पवनचलिताभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तमेतत्प्रमदवनं प्रविशति ।

( ख ) प्रविश निर्वृतिलाभाय ।

---

तु प्रशस्तमनसां पुनः । विवेकवर्तिनामित्यर्थः । उपचारविधिर्न भवति । किंत्वपचारविधिरित्यर्थः । अत्र नञर्थस्तद्विरोधः । इत इतो भवान् । एतत्प्रमदवनं पवनदरचलिताभिः पल्लवांगुलीभिस्त्वरयतीव भवंतं प्रवेष्टुम् । **आमत्तानामित्यादि** । ( श्रवणसुभगैः श्रुतिसुखदायकैरामत्तानां कोकिलानां कूजितैर्मनसिजरुजः कामवेदनायाः सह्यतां सोढुं योग्यतां सानुक्रोशं यथा तथा मामिति शेषः । पृच्छतेव माधवेन वसन्तेन चूतप्रसवसुरभिराम्रकुसुमसुगंधिर्दक्षिणो मलयाचलाभिमुखो मारुतो मेऽङ्गे सान्द्रस्पर्शः करतल इव व्यापृतः । रुग्णस्य करतलेन स्पर्शो लोकसिद्धः । माधवेन मलयवायुनेवा

---

( १ ) B. G. N. T. णं एदं पमदवण पवणबल ( N. दर ) चलाहिं. .भवंतं पवेसिदुं, A. om. एदाहिं. ( २ ) स्पर्शं निरूप्य or स्पर्शसुखं रूपयित्वा. ( ३ ) B. G. T. उन्मत्तानां.

**विदू०**—भो वअस्स अवहाणेण दाव दिट्ठिं देहि । एदं क्खु भवन्तं विलोहइदुकामाए पमद[3]वणलच्छीए जुवईवेसलज्जाइत्तअं वसन्तकुसुमणेवत्थं गहीदं । ( क )

**राजा**—ननु[4] विस्मयादव[5]लोकयामि[6] ।

> **रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः**
> **प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।**
> **आक्रान्ता तिलकक्रियापि[7] तिलकैर्ल[8]ग्नद्विरेफाञ्जनैः**
> **सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥**

( उभा[9]वुद्यानशोभां निर्वर्णयतः )

( ततः प्रविशति पर्युत्सुका मालविका )

---

( क ) भो वयस्य अवधानेन तावद् दृष्टिं देहि । एतत्खलु भवन्तं विलोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जायितृकं वसन्तकुसुमनेपथ्यं गृहीतम् ।

---

कारीत्यर्थः ) ॥ मधुलक्ष्म्या ॥ **रक्ताशोकेत्यादि** । बिम्बाधरे ॥ बिम्बमिवाधरस्तस्मिन् । ‘ विशेषणं विशेष्येण बहुलम् ’ इति विशेषणसमासः । ‘ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ’ इत्युपमितसमासस्तु कविभिरत्र प्रायेण नाङ्गीकृतः । अलक्तको लाक्षा । रक्ताशोकरुचा रक्ताशोककुसुमस्य रुचा कान्त्या विशेषितगुणः । विशेषितोऽतिशयितो ( तिरस्कृतो ) गुणो रागो यस्य स तथोक्तः । ( रक्ताशोकलतयैव अधरयोग्योऽलक्तकरमो निष्पादित इत्यर्थः । ) श्यामावदातारुणम् । शामं चावदातं चारुणं च तथोक्तम् । ‘ वर्णो वर्णेन ’इति कर्मधारयः । कुरबकं कुरबकपुष्पं प्रत्याख्यातविशेषकम् ।

---

( १ ) B. G. N. T. om. भो वअस्स, ( Pn om. भो ). ( २ ) B. G, N. T. om. ( ३ ) N. मधुल°. ( ४ ) N. om. ( ५ ) N. add एतत्. ( ६ ) add तथाहि. ( ७ ) N. च for अपि. ( ८ ) A. P. लीन°. ( ९ ) N. add नाट्येन, B. G. T. इति for उभौ and निरूपयतः

**मालविका**—अविण्णादहिअअं भट्टारं अहिलसन्दी अत्तणो वि दाव लज्जेमि । कुदो विहवो सिणिद्धस्स सहीअणस्स इमं[3] वुत्तंत्तं आचक्खिदुं । ण जाणे अप्पडिआरगरुअं वेअणां केत्तिअं कालं मअणो मं णइस्सदि त्ति । ( कतिचित्पदानि गत्वा ) कहिं णु पत्थिदह्मि । ( इति स्मृतिमभिनीय । ) आम् संदिट्ठह्मि देवीए गोदमचावलादो दोलापरिभट्ठाए सरुजा मे चलणा । तुमं दाव गदुअ तवणीआसोअस्स दोहलं णिवट्टेहिं[10] । जदि सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि तदो अहं ( अन्तरा निःश्वस्य ) अहिलासपूरइत्तअं पसादं दाइस्सं त्ति । जाव णिओअभूमिं पुढमं गदा होमि । जाव[12] अणुपदं मह चलणालंकारहत्थाए बउलावलिआए आअन्तव्वं परिदेवइस्सं[13] दाव विस्सद्धं मुहुत्तअं । ( इति परिक्रामति । ) ( क )

---

( क ) अविज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जे । कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम् । न जानेऽप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । कुत्र ननु प्रस्थितास्मि । आम् संदिष्टास्मि देव्या । गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मे चरणौ । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तय । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततोऽहमभिलाषपूरयितृकं प्रसादं दास्यामीति । यावन्नियोगभूमिं प्रथमं गता भवामि । यावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयागन्तव्यं परिदेवयिष्यामि तावद्विश्रब्धं मुहूर्तकम् ।

---

प्रत्याख्यातं तिरस्कृतं विशेषकं पत्रभङ्गो येन तथोक्तम् । लग्नद्विरेफाञ्जनैर्लग्नः सक्तो द्विरेफो भ्रमर एवाञ्जनं येषु तैस्तिलकैस्तिलककुसुमैस्ति-

---

( १ ) A. P. अणहि ( P. भि ) ण्णाद°. ( २ ) A. Po सिणिद्धअणस्स and Pn. सिणिद्धसहीअणस्स. ( ३ ) B. G. T. om. ( ४ ) N. add इति. ( ५ ) N. आः कहिं क्खु पत्थिदह्मि. ( ६ ) B. G. T. P. ( विचिन्त्य ); A. ( आत्मगतम ). ( ७ ) . B. G. T. N. आ. N. आदिट्ठह्मि. ( ८ ) B. G. N. T. सरुजो मह चलणो; Po. A परिभट्ठा ण सक्कणोमि अहं चलणे चालइदुं. ( ९ ) B. G. T. A. P. om. ( १० ) P. A. N. add त्ति ( ११ ) P. दाव; T ता जाव. ( १२ ) B. G. N. T. दाव. ( १३ ) B. G. T. ता परिदेविस्सं दाव.

**विदू०**—( दृष्ट्वा ) वअस्स एदं क्खु सीहुपाणुव्वेजिअस्स मच्छण्डिआ उवणदा । ( क )

**राजा**—अयि किमेतत् ।

**विदू०**—एसा क्खु णादिपज्जत्तवेसा पज्जुस्सुओ विअ एआइणी मालविआ अदूरे वट्टदि । ( ख )

**राजा**—( सहर्षम् ) कथं मालविका ।

**विदू०**—अह इं । ( ग )

**राजा**—शक्यमिदानीं जीवितमवलम्बितुम् ।

**त्वदुपलभ्य समीपगतां प्रियां**
**हृदयमुच्छ्वसितं मम विक्लवम् ।**
**तरुवृतां पथिकस्य जलार्थिनः**
**सरितमारसितादिव सारसात् ॥ ६ ॥**

---

( क ) वयस्य एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता ।

( ख ) एषा नातिपर्याप्तवेषा पर्युत्सुकेवैकाकिनी मालविकादूरे वर्तते ।

( ग ) अथ किम् ।

---

लकक्रियापि तिलकस्य ललाटिकायाः क्रियाक्रान्तोल्लङ्घिता । परिभूतेत्यर्थः । माधवी मधुसंबन्धिनी श्रीर्लक्ष्मीः । शोभेत्यर्थः । योषितां स्त्रीणां मुखप्रसाधनविधौ मुखालङ्कारकरणे सावज्ञेवावमानेन सहितेव । अवमाननां कृतवती चेत्यर्थः । ( इत्युत्प्रेक्षा ) । मत्स्यण्डिका नाम शर्कराविशेषः । **त्वदुपलभ्येत्यादि** । ( आरसितात् शब्दायमानात् सारसात् तत्स्वनमाकर्ण्येत्यर्थः । तरुवृतां वृक्षच्छायाच्छन्नां सरितं नदीमिव त्वत् सकाशात् समीपगतां प्रि-

---

( १ ) Pn om.; B. G. T. ही ही एदं क्खु, Po. A. om. क्खु, (२) N. Interchange ( ३ ) B. G. T. अवलंबयितुं. ( ४ ) Pn तरुवृतं पथिकस्य जलार्थिनः सलिलमुद्रसितादिव सारसात् । ( ५ ) A. सरसिम.

अयं क्व तत्रभवती ।

**विदू०**—एसो तरुराइमज्झादो णिक्कन्ता इदो एव्व परिवट्टन्ती दीसइ । (क)

**राजा**—[4] वयस्य पश्याम्येनाम् ।

**विपुलं नितम्बबिम्बे[7] मध्ये क्षामं समुन्नतं कुचयोः ।**
**अत्यायतं नयनयो र्मम जीवितमेतदायाति ॥ ७ ॥**

सखे पूर्वस्मादवस्थान्तरमुपारूढा तत्रभवती । तथाहि ।

**शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।**
**माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥**

**विदू०**—एसा वि भवं विअ मअणव्वाहिणा परिमिट्ठा भविस्सदि (ख)

**राजा**—सौहार्दमेव पश्यति ।

---

( क ) एषा तरुराजिमध्यान्निष्क्रान्तेत एव परिवर्तमाना दृश्यते ।

( ख ) एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति ।

---

यामुपलभ्य श्रुत्वा जलार्थिनां पिपासोः पथिकस्येव मम विक्लवं हृदयं उच्छ्वसितमिव हर्षेण स्फीतमित्यर्थः । ) अत्र संचित्यमानार्थस्य प्राप्तेः क्रमो नाम संध्यङ्गमुक्तं भवति । **विपुलमिति** । ( नितंबदेशे श्रोण्यां विपुलं स्थूलं मध्ये क्षामं क्षीणं कुचयोः समुन्नतमुत्तुङ्गं नयनयोरत्यायतमेतन्मालविकावपूरूपं मम जीवितमायाति ) ॥ **शरकाण्डेति** । माधवे वैशाखे परिणतं पक्कं पत्रं यस्यास्तथाभूता कतिपयकुसुमा परिमितपुष्पा कुन्दलतेव परिमिता-

---

( १ ) B. G. T. om. ( २ ) P. add णं &. A. om एसा. ( ३ ) N. अहि for परि &. P. A. इदो एव्व आअच्छदि. ( ४ ) N. add ( विलोक्य सहर्षम । ). ( ५ ) B. G. T. om. ( ६ ) N. om. ( ७ ) B. G. T. °देशे. ( ८ ) A. कस्मात् for पूर्वस्मात्, आरूढा for उपारूढा &. om तथा हि । N. add अतिमनोहरं.

**माल०**—अअं सो ललिअ[1]दोहदापेक्खी अग्गहीदकुसुमणेवत्थो उ-क्कंठिदं[2] मं अणुकरोदि[3] असोओ[3]। जाव से[4] पच्छायसीदले सिलापट्टे णि-सण्णी अत्ताणं विणोदेमि। ( क )

**विदू०**—सुदं भवदा। उक्कण्ठिदह्मि त्ति तत्तहोदीए मन्तिदं। ( ख )

**राजा**—नैतावता भवन्तं प्रसन्नतर्कं[6] मन्ये। कुतः।

**वोढाकुरबकरजसां किसलयपुटभेदसीकरानुगतः।**
**अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥ ९॥**

( मालविकोपविष्टा )

**राजा**—वयस्य इतस्तावत्। आवां लतान्तरितो भवावः।

**विदू०**—इरावदिं विअ अदूरे समत्थेमि[9]। ( ग )

**राजा**—नहि कमलिनीं दृष्ट्वा[10] ग्राहमवेक्षते[11] मतङ्गजः।

( इति विलोकयन् स्थितः। )

---

( क ) अयं स ललितदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठितां मामनुकरोत्यशोकः। यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि।

( ख ) श्रुतं भवता। उत्कण्ठितास्मीति तत्रभवत्या मान्त्रितम्।

( ग ) इरावतीमिवादूरे समर्थये।

---

भरणेयमाभाति )॥ अयं स सुकुमारदोहदापेक्ष्यगृहीतकुसुमनेपथ्य उत्कंठितां मां ( उत्कंठिताया मम ) अनुकरोत्यशोकः। **वोढेत्यादि।** ( कुरबकरजसां तत्पुष्पपरागाणां वोढा वहनकर्ता तेन सुगंधिरित्यर्थः।

---

( १ ) N. सुउमाल for ललित. ( २ ) N. उक्कंठिदाए मह. B. G. T. उक्कंट्ठिदाए मह सोअं and om. असोओ. ( ३ ) N. Interchange. ( ४ ) N. एदस्स. ( ५ ) P. A. add भविअ. ( ६ ) A. प्रसंन्नतर्कतां. ( ७ ) B. G. N. T. शीकर°. ( ८ ) B. G. N. T. सखे. ( ९ ) B. G. T. पेक्खामि. ( १० ) N. लब्ध्वा. ( ११ ) N. अपेक्षते.

**माल०**—हिअअ णिरवलम्बणादो[1] मणोरहादो विरम। किं मं आआसेसि[2]। ( क )

( विदूषको राजनमवेक्षते[3] )

**राजा**—प्रिये पश्य वामतां[4] स्नेहस्य।

**औत्सुक्यहेतुं विवृणोषि न त्वं**
**तत्त्वावबोधैकरसो न तर्कः।**
**तथापि रम्भोरु करोमि लक्ष्य-**
**मात्मानमेषां परिदेवितानां॥ १०॥**

**विदू०**—संपदं भवदो[5] णिस्संसअं[6] भविस्सादि। एसा अप्पिअमअणसंदेसा विवित्ते णं[7] बउलावलिआ उवट्ठिदा। ( ख )

---

( क ) हृदय निरवलम्बनान्मनोरथाद्विरम। किं मामायासयसि।

( ख ) सांप्रतं भवतो निःसंशयं भविष्यति। एषार्पितमदनसंदेशा विविक्ते ननु बकुलावलिकोपस्थिता।

---

किसलयानां नवपल्लवानां भिनत्ति–भिदअण्। तेन मन्दः। सीकरैरनुगतः तेन शीतलः। पश्चात्कर्मधारयः। मलयपर्वतसंसर्गी अनिलो नास्ति निमित्तं यस्यास्तादृशीमपि अनिमित्तां उत्कंठां जनयति।) हृदय निरवलंबनादतिभूमिंगताद् ( अतिभूमिलंघिनस्ते ) मनोरथाद्विरम। किं मामायास्य। **औत्सुक्येत्यादि**। ( हे रंभोरु त्वमौत्सुक्यस्य कारणं न विवृणोषि न कथयसि। तर्कोऽपि अनुमानविशेषोऽपि तत्त्वस्य वस्तुस्वाभाव्यस्यावबोधो निश्चय एव एकं फलं यस्य तथाभूतो न भवति। व्यभिचारादिसंभवादिति भावः। अनुमानमात्रेण न वस्तुतत्त्वनिश्चयो भवतीत्यर्थः। तथाप्यात्मानं एषां त्वदुक्तानां परिदेवितामां विलापानां लक्ष्यं उद्देश्यं करोमि। त्वदुक्तपरिदेवनं मामुद्दिश्यैवेति तर्कयामि। **अर्पितेत्यादि**। अर्पितो मया संप्रेषितो

---

( १ ) Po. णिप्फलादो &c. B. G. N. T. add अदिभूमिलघिणो ( N. से ). ( २ ) B. G. N. T. आआसिअ. ( ३ ) B. G. T वीक्षते; N. अपेक्षते. ( ४ ) N. वामत्वं for वामतां and B. G. T. पश्य महत्वं स्नेहस्य. ( ५ ) Po. om. ( ६ ) Po णिस्संसओ. ( ७ ) A. add एआ ( एका ).

**राजा**—अपि स्मरेदस्मदभ्यर्थनाम् ।

**विदू०**—किं दाणिं एसा दासीए दुहिदा दावगरुअं संदेसं विसुमरेदि । अहं[4] वि दाव ण विसुमरेमि । ( क )

( प्रविश्य चरणालङ्कारहस्ता )

**बकुला०**—अवि सुहं सहीए । ( ख )

**माल०**—अह्मो बउलावलिए । सहि साअदं दे । उवविस । ( ग )

**बकुला०**—( उपविश्य ) हला तुमं दाणिं जोग्गदाए णिउत्ता । ता एक्कं चलणं उवणेहि । जाव सालत्तअं सणेउरं करेमि । ( घ )

**माल०**—( आत्मगतम् ) हिअअ सुहिहददाएं अलं उवट्ठिदो अअं विहवो त्ति । कहं दाणिं अत्ताणं मोचएअं । अहवा एदं एव्व मह मिच्चुमण्डणं भविस्सदि । ( च )

---

( क ) किमिदानीमेषा दास्या दुहिता तावद्गुरुकं संदेशं विस्मरति । अहमपि तावन्न विस्मरामि ।

( ख ) अपि सुखं सख्याः ।

( ग ) अहो बकुलावलिका । सखि स्वागतं ते । उपविश ।

( घ ) सखि त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं चरणमुपनय । यावत्सालक्तकं सनूपुरं करोमि ।

( च ) हृदय सुखिततया अलमुपस्थितोऽयं विभव इति । कथमिदानीमात्मानं मोचयेयम् । अथवैतदेव मम मृत्युमण्डनं भविष्यति ।

---

(१) N. add असौ. ( om. अस्मद् ). ( २ ) P. A. सुना. ( ३ ) P. N. तुह. ( ४ ) Pn. B. G. T. om. अहं &c.; N. om. वि. &. A. Po दाणिं for दाव. ( ५ ) A. om. चरण. ( ६ ) A. Po add उवट्ठिआ. ( ७ ) Pn add देवीए &c. Po A. दोहलकरण°. ( ८ ) B. G. N. T. सुहिदाए. ( ९ ) B. G. T. om. त्ति ( १० ) N. add दाणिं.

**बकुला०**— किं विआरेसि । उस्सुका क्खु इमस्स तवणीआसोअस्स कुसुमोग्गमे[1] देवी । ( क )

**राजा**—कथमशोकदोहदनिमित्तो ऽयमारम्भः ।

**विदू०**—[2] किं क्खु ण जाणासि अकालणादो देवी इमं अन्तेउरणेवत्थेण ण संजोअइस्सदि त्ति । ( ख )

**माल०**—हला मरिसेहि दाव णं । ( पादमुपहरति ) ( ग )

**बकुला०**—अयि सरीरं सि मे । ( [3] नाट्येन चरणसंस्कारमारभते ) ( घ )

**राजा**—

> **चरणान्तनिवेशितां प्रियायाः**
> **सरसां पश्य वयस्य रागरेखाम् ।**
> **प्रथमामिव पल्लवप्रसूतिं**
> **हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥**

**विदू०**—चलणाणुरूवो क्खु तत्तहोदीए अहिआरो[4] उवक्खित्तो । (च)

---

( क ) किं विचारयसि । उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी ।

( ख ) किं खलु न जानास्यकारणाद्देवीमामन्तःपुरनेपथ्येन न संयोजयिष्यतीति ।

( ग ) सखि मर्षय तावदेनम् ।

( घ ) अयि शरीरमसि मे ।

( च ) चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः ।

---

मदनविषयकरो संदेशो भवदुक्तरूपो यस्यै ( यस्याः ) तादृशी । **चरणान्ते**

---

( १ ) P. समुग्गमे; N. मुउलुग्गमे. ( २ ) N. किं णु खु जाणासि तुमम् । माकालणादो .... जोअइस्सदि त्ति; B. G. T. किं खु ण जाणासि .... ... जोअइस्सदि. (३) N. add इति. (४) B.G.N.T. om. (५) Pn अलंकारो.

**राजा**—सम्यगाह भवान्[1]।

**नवकिसलयरागेणाग्रपादेन[2] बाला**
**स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।**
**अकुसुमितमशोकं दोहलापेक्षया वा**
**प्रणमितशिरसं[3] वा कान्तमार्द्रापराधम्॥ १२॥**

**विदू०**—[4] पहरिस्सादि तत्तहोदि तुमं अवरद्धम्। ( क )

**राजा**—[5] प्रतिगृहीतं[6] वचः सिद्धिदर्शिनो ब्राम्हणस्य।

( ततः प्रविशति युक्तमदे[7]रावती चेटी च )

**इरा०**—हञ्जे णिउणिए सुणामि बहुसो मदो किल इत्थिआजणस्स विसेस[8]मण्डणं त्ति। अवि सच्चो लोअवादो अअं[9][10]। ( ख )

---

( क ) प्रहरिष्यति तत्र भवति त्वामपराद्धम्।

( ख ) हञ्जे ( चेटि ) निपुणिके शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति। अपि सत्यो लोकवादो ऽयम्।

---

**त्यादि**। ( वयस्य प्रियायाश्चरणान्तनिवेशितां सरसामार्द्रां रागरेखां हरदग्धस्य शिवकोपानलभस्मीभूतस्य मनोभवद्रुमस्य कामरूपतरोः प्रथमां पल्लवप्रसूतिमिव पश्य। )। ( भो वयस्य चरणानुरूपस्तत्रवत्या अलंकार उपक्षिप्तः )। किं नु खलु जानासि त्वम्। मम कारणाद्देवीमामन्तः पुरनेपथ्येन संयोजयतीति। **नवकिसलयेत्यादि**। ( बाला मालविकानेन प्रत्यक्ष दृश्येन नवकिसलयरागेण नवपल्लवताम्रेण स्फुरितनखरुचा प्रकाशितनखकान्तिना अग्रपादेन दोहदापेक्षया कुसुमोद्गमार्थमौषधप्रदानानुरोधेनाकु-

---

( १ ) P. A. सम्यगभिहितं भवता. ( २ ) B. G. T. आर्द्र°. (३) P. A. प्रणिहित°. (४) P. A. B. G. T. पारइस्सासि तत्तहोदीए अवरध्दुं. (५) T. N. add मूर्च्छा. (६) P. A. परि°. (७) Po A. उन्मत्तवेषा. (८) B. G. N. T. om. विसेस. ( ९ ) A. अअं. ( १० ) P. A. om.

**निपु०**—पुढमं लोअवादो एव्व । अज्ज सच्चो संवुत्तो । ( क )

**इरा०**—अलं सिणेहभणिदेण । कहेहि कुदो दाणिं अवगदं दोला-घरं पुढमं गदो भट्टा त्ति । ( ख )

**निपु०**—भट्टिणीए अखण्डिदादो पणआदो । ( ग )

**इरा०**—अलं सेवाए । मज्झत्थदं परिगेण्हीअ भणाहि । ( घ )

**निपु०**—वसन्दोवाअणलोलुवेण अज्जगोदमेण कहिदं । तुवरदु भट्टिणी । ( च )

**इरा०**—( अवस्थासदृशं परिक्रम्य ।) हज्जे मदेण किलामिअमाणं अत्ताणं अज्जउत्तदंसणे हिअअं तुवरेदि । चलणा उण ण मग्गे पसरन्दि । ( छ )

---

( क ) प्रथमं लोकवाद एव । अद्य सत्यः संवृत्तः ।

( ख ) अलं स्नेहभणितेन । कथय कुत इदानीमवगतं दोलागृहं प्रथमं गतो भर्तेति ।

( ग ) भट्टिन्या अखण्डितात्प्रणयात् ।

( घ ) अलं सेवया । मध्यस्थतां परिगृह्य भण ।

( च ) वसन्तोपायनलोलुपेनार्यगौतमेन कथितम् । त्वरतां भट्टिणी ।

( छ ) हञ्जे ( चेटि ) मदेन क्लाम्यमानमात्मानमार्यपुत्रदर्शने हृदयं त्वरयति । चरणौ पुनर्न मार्गे प्रसरतः ।

---

सुमितमपुष्पितमशोकं आद्रापराद्धं प्रणयकृतापराद्धं अभिनवापराद्धं वा

---

( १ ) N संकित्तणासंसिणा सिणेहेण अलं, T. अलं मइ सिणिहेण; B. G. सच्चिणिसंसिणा &c. ( २ ) B. G. अवगमिदं; T. अवगमिदव्वं; N. अवगमिदव्वो. ( ३ ) B. G. N. T. add ण वे. ( ४ ) P. A. गेण्हीअ; B. G. गदुअ. ( ५ ) A. P. हला. ( ६ ) A. P. मिलाअमाणं; B. G. T. गिलाअमाणं. ( ७ ) N. add मह. ( ८ ) G. B. T. ओगलन्ति.

**निपु०**—णं पत्तह्म दोलाघरअं । ( क )

**इरा०**—णिउणिए अज्जउत्तो एत्थ ण दीसदि । ( ख )

**निपु०**—भट्टिणी[1] ओलोअदु ।[2] परिहासणिमित्तं कहिं वि[3] अदिट्ठेण भट्टिणा होदव्वं । अह्मे वि[4] इमं पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टं पविसाह्म । ( ग )

**इरा०**—( तथा करोति )[5]

**निपु०**—( विलोक्य ) ओलोअदु भट्टिणी । चूदङ्कुरं विचिण्णन्दीणं पिपीलिआहिं दंसिदं[6] । ( घ )

**इरा०**—कहं विअ ।[7] ( च )

**निपु०**—एसा असोअपाअवच्छाआए मालविआए बउलावलिआ चलणालंकारं णिवट्टेदि । ( छ )

---

( क ) ननु प्राप्ते स्वो दोलागृहम् ।

( ख ) निपुणिके आर्यपुत्रोऽत्र न दृश्यते ।

( ग ) भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् । आवामपीमं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टं प्रविशावः ।

( घ ) अवलोकयतु भट्टिनी । चूताङ्कुरं विचिन्वन्त्योः पिपीलिकाभिर्दष्टम् ।

( च ) कथमिव ।

( छ ) एषाशोकपादपच्छायायां मालविकाया बकुलावलिका चरणालङ्कारं निर्वर्तयति ।

---

प्रणतशिरसं कान्तं प्रियं च द्वौ हन्तुं ताडयितुमर्हति । ) कथय कुत

---

( १ ) P. A. om.; B. G. T. णं भट्टिणी. ( २ ) Po A. भट्टिणीए. ( ३ ) Po A. गुम्मे गूढेन; Pn. B. G. T. गूढेन. ( ४ ) N. om. ( ५ ) B. G. N. T. तह । for तथाकरोति. ( ६ ) A. दंसणं ( दंशनं ). ( ७ ) A. P. B. G. T. किं विअ एव.

**इरा०**—( शङ्कां रूपयित्वा ) अभूमी इअं मालविआए । कहं[1] एत्थ तक्केसि । ( क )

**निपु०**—तक्केमि दोलापरिब्भट्टाए सरुअचलणाए[2] देवीए असोअदोहलहिआरे मालविआ णिउत्तेत्ति । अण्णहा कहं देवी सअं धारिअं णेउरजुअलं परिअणस्स अणुजाणिस्सदि[3] । ( ख )

**इरा०**—महदी क्खु से संभावणा । ( ग )

**निपु०**—किं उण[4] णो अण्णेसीअदि भट्टा । ( घ )

**इरा०**—हज्जे मे चलणा अण्णदो ण पवट्टन्दि । मदो[5] मं विआरेदि । आसंकिदस्स दाव अन्तं गमिस्सं । ( मालविकां[6] निर्वर्ण्य । आत्मगतम् । ) ठाणे क्खु कादरं मे हिअअं । ( च )

**बकु०**—( मालविकायै[7] चरणं दर्शयन्ती ) अवि[8] रोआदि दे[9] अअं राअरेहाविण्णासो । ( छ )

---

( क ) अभूमिरियं मालविकायाः । कथमत्र तर्कयसि ।

( ख ) तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याशोकदोहदाधिकारे मालविका नियुक्तेति ।

( ग ) महती खल्वस्याः संभावना ।

( घ ) किं पुनर्नान्विष्यते भर्ता ।

( च ) हज्जे मे चरणावन्यतो न प्रवर्तेते । मदो मां विकारयति । आशङ्कितस्य तावदन्तं गमिष्यामि । स्थाने खलु कातरं मे हृदयम् ।

( छ ) अपि रोचते तेऽयं रागरेखाविन्यासः ।

---

इदानीमवगन्तव्यो दोलागृहं प्रथमं गतो भर्ता न वेति । ( कुत इदमवगतं दोलागृहं प्रथमं गतो भर्ता न वेति । ) पिपीलिकाभिर्दष्टम् । भावेक्तः । सखि

---

( १ ) P. A. कि तर्केसि. ( २ ) A. P. om. (३) B. G. N. T. अब्भणुजाणिस्सदि. ( ४ ) B. G. N. T. om. उण. ( ५ ) Po. मणो &c. ( ६ ) N. add इति; B. G. मालविका—( आत्मगतम् ) &c. ( ७ ) A. P. B. G. T. om. ( ८ ) B. G. T. कि वि. ( ९ ) Pn. om. देअअं; B. G. T. om. अअं.

**माल०**—हला अत्तणो चलणं गदो[1] त्ति लज्जेमि णं पसंसिदुं।
[2]केण पसाहणैकलाए अहिविणीदासि। (क)

**बकु०**—एत्थ अहं भट्टिणो सिस्स ह्मि। (ख)

**विदू०**—तुवरेहि दावँ णं[4] गुरुदक्खिणाए। (ग)

**माल०**—दिट्ठिआ ण गव्विदासि। (घ)

**बकु०**—उवदेसाणुरूवे[6] चलणे[6] लम्भिअ अज्ज दाणिं गव्विदा भविस्सं। (रागं विलोक्य। आत्मगतम्।) हन्त सिद्धं मे दौत्त्वं।[7] (प्रकाशम्।) सहि एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो[8]। केवलं मुहमारुदो लम्भइदव्वो। अहवा पवादं एव्वं एदं ठाणं। (च)

**राजा**—सखे पश्य पश्यँ।

---

(क) सखि आत्मनश्चरणं गत इति लज्ज एनं प्रशंसितुम्। केन प्रसाधनकलायामभिविनीतासि।

(ख) अत्राहं भर्तुः शिष्यास्मि।

(ग) त्वरय तावदेनां गुरुदक्षिणायै।

(घ) दिष्ट्या न गर्वितासि।

(च) उपदेशानुरूपौ चरणौ लब्ध्वेदानीं गर्विता भविष्यामि। हन्त सिद्धं मे दौत्यम्। सखि एकस्य ते चरणस्यावसितो रागनिक्षेपः। केवलं मुखमारुतो लम्भयितव्यः। अथवा प्रवातमेवैतत्स्थानम्।

---

न मे चरणावन्यतः प्रवर्तेते। मदश्च मां विचारयति। उपदेशानुरूपौ

---

(१) B. G. N. T. om. गदो; A. Po गदं. (२) A. Po add कहेहि; N. तेण. (३) Po सिप्पसाहणकलाअं. (४) A. Po B. G. T. add क्खु. (५) A. P. B. G. T. दाणिं. (६) N. °रूवा चलणा. (७) N. दूत्थम; B. G. T. सिद्धो मे दप्पः (८) Pn. °विक्खेवो. (९) N. om. (१०) N. A. om. one पश्य.

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन वीजयितुम् ।
प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥ १३ ॥

**विदू०**—कुदो दे अणुसओ । [2] चिरं भवदा एदं कमेण अणुहोदव्वं (क)

**बकु०**—सहि[3] अरुणसदपत्तं विअ सोहदि दे चलणो[4] । सव्वहा भट्टिणो अङ्कपरिवट्टिणी होहि । (ख)

(इरावती निपुणिकामुखमवेक्षते)

**राजा**—ममेयमाशीः ।

**माल०**—हला[6] अवअणीअं मन्तेसि । (ग)

**बकु०**—मन्तिदव्वं एव्व मए मन्तिदं । (घ)

**माल०**—पिआ क्खु अहं तुह । (च)

**बकु०**—ण केवलं मह । (छ)

---

(क) कुतस्तेऽनुशयः । चिरं भवतैतत्क्रमेणानुभवितव्यम् ।

(ख) सखि अरुणशतपत्रमिव शोभते ते चरणः । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।

(ग) सखि अवचनीयं मन्त्रयसे ।

(घ) मन्त्रयितव्यमेव मया मन्त्रितम् ।

(च) प्रिया खल्वहं तव ।

(छ) न केवलं मम ।

---

चरणौ लब्ध्वाद्य गर्विता भविष्यामि ॥ **आर्द्रालक्तकमित्यादि** । मुखमारु-

---

(१) B. G T. शोषयतः; शोषयितुं (२) P. चिरं भवदा एदं अणुहोदव्वं अइरेण; B. G. T. एदं भवदा चिरक्कमेण अणुभविदव्वं. (३) P. A. cm. (४) B G. N. T. चलणं. (५) B. G. N. T. निपुणिकाम. (६) N. मा अवअणीअं मन्तेहि. B. G. T. add. हला to this.

**मालo**—कस्स वा अण्णस्स । ( क )

**बकुo**—गुणेसु अहिणिवेसिणो भट्टिणो वि । ( ख )

**मालo**—अलीअं मन्तेसि । एदं एव्व मयि णत्थि । ( ग )

**बकुo**—सच्चं तुइ णत्थि । भट्टिणो किसेसु [1]इसिपरिपण्डरेसु अङ्गेसु दीसइ । ( घ )

**निपुo**—पुढमं भणिदं विअ हदासाए उत्तरं । ( च )

**बकुo**—अणुराओ अणुराएण परिक्खिदव्वो[3] त्ति सुअणवअणं पमाणीकरेहि । ( छ )

**मालo**—किं अत्तणो छन्देण मन्तेसि । ( ज )

---

( क ) कस्य वान्यस्य ।

( ख ) गुणेष्वभिनिवेशिनो भर्तुरपि ।

( ग ) अलीकं मन्त्रयसे । एतदेव मयि नास्ति ।

( घ ) सत्यं त्वयि नास्ति । भर्तुः कृशेष्वीषत्परिपाण्डुरेष्वङ्गेषु दृश्यते ।

( च ) प्रथमं भणितमिव हताशाया उत्तरम् ।

( छ ) अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणीकुरु ।

( ज ) किमात्मनश्छन्देन मन्त्रयसे ।

---

तेन वीजयितुं शोषयितुं । प्रथमतरो मुख्यतरः । प्रतिपन्नः प्राप्तः ॥ भर्तुः कृशेषु दर ( वर ) पाण्डुरेषु अङ्गेषु दृश्यते । प्रथमं गुणितमिव हताशाया उत्तरम् । नहि भर्तुः खल्वेतानि प्रणयमृदूनि बिंबान्तरितान्यक्षराणि । दुर्जाते

---

( १ ) B. G. T. सुन्दर°; N. वर°. ( २ ) B. G. N. गुणितं; T. गणितं. ( ३ ) A. पडिच्छिदव्वो ( प्रतिच्छेतव्यो ); N. वच्छेदव्वो ( प्रत्येष्टव्यः ); पुच्छिदव्वो.

**बकु०**—णाहि णाहि[1]। भट्टिणो क्खु एदाइं पणअमआइं[2] अक्खराइं बिम्बन्तरिदाइं[3] ( क )

**माल०**—हला देविं विचिन्तिअ ण मे हिअअं विस्ससदि। ( ख )

**बकु०**—मुद्धे भसरसंबाधो[4] भविस्सदि[5] त्ति वसन्दावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो। ( ग )

**माल०**—तुमं दाव दुज्जादे[6] अच्चन्तं सहाया होहि। ( घ )

**बकु०**—विमद्दसुरही बउलावलिआ क्खु अहं। ( च )

**राजा**—साधु बकुलावलिके साधु।

**भावज्ञानानन्तरं प्रस्तुतेन**

**प्रत्याख्याने दत्तयुक्तोत्तरेण।**

---

( क ) नहि नहि। भर्तुः खल्वेतानि प्रणयमयान्यक्षराणि बिम्बान्तरितानि।

( ख ) सखि देवीं विचिन्त्य न मे हृदयं विश्वसिति।

( ग ) मुग्धे भ्रमरसंबाधो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसयितव्यः।

( घ ) त्वं तावद्दुर्जातेऽत्यन्तं सहाया भव।

( च ) विमर्दसुरभि र्बकुलावलिका खल्वहम्।

---

दुःखे। 'दुर्जातं व्यसने क्लीबं असम्यग्जातवस्तुनि' इति केशवस्वामी। **भावज्ञानेत्यादि**। ( भावस्यास्या अनुरागस्य ज्ञानानन्तरं प्रस्तुतेन कृत-

---

( १ ) A. P. om. णहि. ( २ ) B. G. N. T. मिदुआइं. ( ३ ) N. वत्तन्तरिदाइं; B. G. T. विप्पेरिदाइं ( विप्रेरितानि ). (४) N. A. B. G. संपादो. ( ५ ) T. अत्थि; P. A. om.; B. G. भमरसंपादो वसन्तोदार (T. ०तावदार ) संभूदो दाणिं (T. om. दाणिं ) णवचूदप्पसवो ओदसणिज्जो. ( ६ ) B. G. T. जाव. ( ७ ) Po. add मे. (८) P. अच्चन्तसहाइणी T. गच्छन्तस्स सहाइणी; B. G. ओदंसिणीज्जो. (९) Pn. बउलिआवलिआ णं अहं.

**वाक्येनेयं स्थापिता स्वे निदेशे**

**स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ १४ ॥**

**इरा०**—हञ्जे[1] पेक्ख । कारिदं एव्व बउलावलिआए एदं[3] पदं मालविआए । ( क )

**निपु०**—भट्टिणि णिव्विआरस्स[4] वि उस्सुअत्तणजणओ उवदेसो।(ख)

**इरा०**—ठाणे क्खु संकिदं मे हिअअं । गहीदत्था अणन्तरम् चिन्तइस्सं । ( ग )

**बकु०**—एसो दुदीओ वि दे णिवुत्तपरिकम्मो[5] चलणो । जाव दुवे वि[6] सणेउरे करेमि । ( इति नाट्येन नूपुरयुगलमामुच्य । ) हला उट्ठेहि । अणुचिट्ठ[7] देवीए असोअविआसइत्तअं णिओअं । ( घ )

---

( क ) हञ्जे पश्य । कारितमेव बकुलावलिकयैतत्पदं मालविकायाः ।

( ख ) भट्टिनि निर्विकारस्याप्युत्सुकत्वजनक उपदेशः ।

( ग ) स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्थानन्तरं चिन्तयिष्यामि ।

( घ ) एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः । यावद् द्वावपि सनूपुरौ करोमि । हला उत्तिष्ठ । अनुतिष्ठ देव्या अशोकविकासयितृकं नियोगम् ।

---

प्रसङ्गेन प्रत्याख्याने तया निराकरणे कृते सतीति शेषः । दत्तोचित्तोत्तरेण वाक्येन स्वे मदर्थाभ्यर्थनाप्रदर्शनरूपे निदेशे तत्प्रतिपालनरूपे इयं मालविका स्थापिता। कामिनो जनस्य प्राणा दूत्यधीना यत् तत् स्थानेऽतीवयुक्तमित्यर्थः ॥ भट्टिनि निर्विकारस्यापि उत्सुकत्वजननमुपदेशः ॥ यावदेनं नूपुर-

---

( १ ) N. om. ( २ ) कारिदव्वं बउलावलिआए मालविआ पदं. ( ३ ) Po. A. om.; T. एदस्सि. ( ४ ) B. G. N. T. णिव्विआरस्स ( N. om. ) अहिआरस्स उद्दवोवदेसो. ( ५ ) P. A. समत्त°; B. G. T. संवुत्त. ( ६ ) B. G. N. T. णं ( एनं ) सणेउरं. ( ७ ) P. add दाणि.

**इरा०**—सुदो देवीए णिओओ त्ति[1]। हेदु दाणिं। ( क )

**बकु०**—एसो उवारूढराओ उवभोअक्खमो पुरदो दे वट्टइ[2]। ( ख )

**माल०**—किं भट्टा। ( ग )

**बकु०**—( सस्मितम् ) ण दाव[3] भट्टा। एसो असोअसाहावलम्बी पल्लवगुच्छो। ओदंसेहिं णं[4]।[5] ( घ )

**विदू०**—अवि सुदं भवदा। ( च )

**राजा**—सखे पर्याप्तमेतावता कामिनाम्।

> **अनातुरोत्कण्ठितयोः[6] प्रसिद्ध्यता**
> **समागमेनापि रतिर्न मां प्रति।**
> **परस्परप्राप्तिनिराशयोर्वरं**
> **शरीरनाशोऽपि समानुरागयोः[7]॥ १५॥**

---

( क ) श्रुतो देव्या नियोग इति। भवत्विदानीम्।

( ख ) एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते।

( ग ) किं भर्ता।

( घ ) न तावद्भर्ता। एषोऽशोकशाखावलम्बी पल्लवगुच्छः। अवतंसयैनम्।

( च ) श्रुतं भवता।

---

शोभितं करोमि॥ **अनातुरेत्यादि**। अनातुरोत्कण्ठितयोः। अनातुरोऽनार्त उत्कण्ठितः कामोत्कण्ठित इत्यर्थः। प्रसिद्ध्यता संभवता समागमेनापि संपर्केणापि मां प्रति मामनु। मत्पक्ष इत्यर्थः। रतिर्न शृङ्गारो न भवति।

---

( १ ) N. om. त्ति. ( २ ) B. G. T. चिट्ठइ. ( ३ ) B. G. T. add. दाव. ( ४ ) N. om. ( ५ ) B. G. T. add मालविका विषादं नाटयति. ( ६ ) Po A. अनादरो°. ( ७ ) B. G. समानरागयोः

( मालविका रचितपल्लवावतंसा सलीलमशोकाये पादं प्रहिणोति । )

**राजा**—वयस्य

> **आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।**
>
> **उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १९ ॥**

[3]**माल०**—[4]अवि णाम अह्माणं संभावणा सफला भवे । ( क )

**बकु०**— हला णत्थि दे दोसो ।[5] णिग्गुणो अअं असोओ जइ कुसुमो[6]ब्भेदमन्थरो भवे जो दे[7] चलणसक्कारं[8] लहेइ[9] । ( ख )

---

( क ) अपि नामावयोः संभावना सफला भवेत् ।

( ख ) सखि नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेद्यस्ते चरणसत्कारमलभत ।

---

एकानुरागस्य रसाभासत्वात् । तथा चोक्तम्—' एकत्रैवानुरागश्च बहुसक्तिश्च योषितः । अनौचित्यप्रवृत्तत्वात् शृङ्गाराभास उच्यते ॥' इति ( एतावता एतादृशश्रवणेनैव कामिनां अभीष्टमितिशेषः । एकस्य अनातुरस्य अपरस्य चोत्कंठितस्य एतयोर्विषमानुरागयो र्नायकनायिकयोः प्रसिद्धयता कथंचिन्निष्पद्यमानेनापि समागमेन मां प्रति न वरं । किं तु समानुरागयोः परस्परप्राप्तिनिराशयोः सतोः शरीरनाशोऽपि वरं । तथा च एतस्या मय्यनुरागवत्वात् समागमाभावे मम देहत्यागोप्यभीष्टः ) । **आदायेत्यादि** । कर्णकिसलयं कर्णपूरार्थं किसलयम् । अत्र कर्ण शब्देन कर्णपूरो लक्ष्यते । कर्णभूषण

---

( १ ) N. om. ( २ ) P. अशोकताडनाय. ( ३ ) A. P. N. om this, speech. ( ४ ) T. add here वामो क्खु एसो असोसो जो वञ्जअं पमाणी कदुअ ( व्यंजकं प्रमाणी कृत्य ) कुसुमुग्गमं णं दसेदि &c.; (५) T. add अअं जेव. ( ६ ) P. A. समुब्भेद°; T. B. G. उग्गम°. ( ७ ) P. A. ईरिसं. ( ८ ) N. अलङ्कारं. ( ९ ) B. N. G. T. लंभिअ ( N. अलभत. A. लेभे ); T. लम्भितः.

राजा—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः।
अशोक यदि सद्य एव कुसुमैर्न संपत्स्यसे
वृथा वहसि दोहलं ललितकामिसाधारणम्॥ १७॥

सखे वचनावसरपूर्वकं प्रवेष्टुमिच्छामि।

**विदू०**—एहि। णं परिहासइस्सं। (क)

( उभौ प्रवेशं कुरुतः। )

**निपु०**—भट्टिणि भट्टा एत्थ पविसदि। (ख)

**इरा०**—एव्वं मम पुढमं चिन्तिदं हिअएण। (ग)

**विदू०**—( उपसृत्य ) होदि जुत्तं णाम अत्तहोदो पिअवअस्सो अअं असोओ वामपादेण ताडेदुं। (घ)

---

(क) एहि। एनां परिहासयिष्यामि।

(ख) भट्टिनि भर्त्तात्र प्रविशति।

(ग) एवं मम प्रथमं चिन्तितं हृदयेन।

(घ) भवति युक्तं नामात्रभवतः प्रियवयस्योऽयमशोको वामपादेन ताडयितुं।

---

चरणार्पणयोस्तुल्यरूपपरिवर्तेन वञ्चितं अकृतार्थं मन्ये॥ यस्ते चरणसत्कारं लब्धा ( लब्ध्वा )॥ **अनेनेत्यादि**। ललितकामिसाधारणं चारु-

---

(१) B. G. N. T. मुकुलैः. (२) B. G. I. मुधा. (३) B. G. T. °अवकाश°; N. °अनुसर°. (४) A. मालविआए for मम. (५) B. G N. T. उपेत्य. (६) N. om. &. A, P add ण. (७) B. G. N. T. A. om. अअ. (८) N. °असोओ। णं &c.

**उभे**—( ससंभ्रमम् । ) अह्मो भट्टा । ( क )

**विदू०**—बउलावलिए गहीदत्थाए तुए अत्तहोदी ईरिसं अविणअं करन्दी कीस ण णिवारिदा[1] । ( ख )

( मालविका भयं रूपयति[2] )

**निपु०**—भट्टिणि देक्ख[3] । किं[4] पजुत्तं[5] अज्जगोदमेण । ( ग )

**इरा०**—कहं[6] बह्मबन्धु अण्णहा जीविस्सदि[7] । ( घ )

**बकु०**—अज्ज एसा देवीए णिओअं अणुचिट्ठादि । एदस्सिं अदिक्कमे परवदी इअं । पसीदतु भट्टा । ( आत्मना समर्मेनां प्रणिपातयति । ) ( च )

**राजा**—यद्येवमनपराद्धासि । उत्तिष्ठ भद्रे । ( इति हस्तेन गृहीत्वो[9]-त्थापयति । )

---

( क ) अहो भर्ता ।

( ख ) बकुलावलिके गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ।

( ग ) भट्टिनि पश्य किं प्रयुक्तमार्यगौत्तमेन ।

( घ ) कथं ब्रह्मबन्धुरन्यथा जीविष्यति ।

( च ) आर्य एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ।

---

कामिसाधारणं चारुकामिजनतुल्यं दोहलं पादनिक्षेपरूपं वृथा मिथ्या वहसि ॥ 'जुत्तंणाम ' इत्यत्र काकुरनुसंधेया ॥ **भयं रूपयतीति** । अत्र भयकथना

---

( १ ) P. A. वारिदा. ( २ ) P. A. निरूपयति. ( ३ ) B. G. N. T. पेक्ख. ( ४ ) Pn om. ( ५ ) B. G. N T. P. पउत्तं ( प्रवृत्त ). ( ६ ) B. G. N. T. add क्खु; Po. A. add सः. ( ७ ) N. होदि. ( ८ ) B. G. N. T. ( इत्यात्मना सहैनां &c ). ( ९ ) N. add एनां.

**विदू०**—जुज्जइ । देवी एत्थ माणइदव्वा । ( क )

**राजा**—

**किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे।**
**चरणस्य न ते बाधा संप्रति वामोरु वामस्य ॥ १८ ॥**

( मालविका लज्जां नाटयति )

**इरा०**—अहो णवणीदहिअओ अज्जउत्तो । ( ख )

**माल०**—बउलावलिए एहि । अणुट्ठिदं अत्तणो णिओअं देवीए णिवेदेह्म । ( ग )

**बकु०**—तेणहि विण्णवेहि भट्टारं विसज्जेहि त्ति । ( घ )

**राजा**—भद्रे यास्यसि । मम तावदुपस्थावसरमर्थितं श्रूयताम् ।

**बकु०**—अवहिदा सुणाहि । आणवेदु भट्टा । ( च )

---

( क ) युज्यते । देव्यत्र मानयितव्या ।

( ख ) अहो नवनीतहृदय आर्यपुत्रः ।

( ग ) बकुलावलिके एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः।

( घ ) विज्ञापय भर्तारं विसर्जयेति ।

( च ) अवहिता शृणु । आज्ञापयतु भर्ता ।

---

त्संभ्रमणं नाम संध्यंगमुक्तं भवति ॥ **किसलयेत्यादि** । स्पष्टोर्थः ॥ अत्र प्रियोक्त्या संगृहो नाम संध्यङ्गमुक्तं भवति ॥ अहो अविनीतहृदयोऽयमार्यपुत्रः

---

( १ ) P. A. लज्जते; N. रूपयति. ( २ ) P. add सासूयम. ( ३ ) B. G. N. T. Po णवणीदकप्प°. ( ४ ) A. add एव्व. ( ५ ) B. G. N. T. om; Po. A. om. हि.

**राजा**—

**धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।**

**स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥**

**इरा०**—( सहसोपसृत्य । ) पूरेहि पूरेहि । णं[1] असोओ कुसुमं दंसेदि । अअं उण[2] पुप्फइ फलइ अ । ( क )

( सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः । )

**राजा**—( अपवार्य । ) वयस्य का प्रतिपत्तिरत्र ।

**विदू०**—किं अण्णं । जङ्घाबलं एव्वं[3] । ( ख )

---

( क ) पूरय पूरय । नन्वशोकः कुसुमं दर्शयति । अयं पुनः पुष्प्यति फलति च ।

( ख ) किमन्यत् । जङ्घाबलमेव ।

---

( दयार्द्रचित्तत्वात्तथात्वोत्प्रेक्षा । सोल्लुण्ठनोक्तिरियं ) । **धृतिपुष्पेति** ( अयं मादृशः जनः चिरात्प्रभृति धृतिपुष्पं धृतेः पुष्पं न बध्नाति । अतोऽनन्यरुचेरनन्याभिलापस्यास्य मादृशस्य जनस्य दोहदं अभीष्टं स्पर्शामृतेन पूरय । पूरय पूरय । अशोकः कुसुमं न दर्शयति ( अशोकः पुष्पं दर्शयति । ) अयं पुनः पुष्प्यति फलति च ( न विकाशते किन्तु फलति फलिष्यतीत्यर्थः ) । अत्र संरब्धवचनात्तोटकं नाम संध्यङ्गमुक्तं भवति । **वयस्येत्यादि ।** का प्रतिपत्तिः को विचारः । क उपाय इत्यर्थः । अत्र भीतेर्गम्यमानत्वादुद्वेगो नाम संध्यङ्गमुक्तं भवति । मया आत्मनो वञ्चनावचनं प्रमाणीकृत्य व्याघगीतरक्तया हरिण्येवाशंकितया न विज्ञातमेतत् । एतदित्यनेन राज्ञा कपटाचरणं परामृश्यते ॥ प्रतियोजयेदानीं किमपि ।

---

( १ ) B. G. N. T. असोओ कुसुमं ण दंसेदि. ( २ ) Po A. अअं उण ण केवलं पुप्फइ फलइ अ; N. अअं उण पुफदि एव्व, B. G. T. अअं उण उत्तंभिदो एव्व; ( T. add ण पुप्फइ फलइ जेव्व ). ( ३ ) T. add ( सरणं ).

**इरा०**—'बउलावलिएँ साहु उवक्कन्तम् । मालविए ताँ दाणिं तुमं अज्जउत्तं सफलपत्थणं करेहि । ( क )

**उभे**—पसीददु भट्टिणी । का अह्मे भत्तुणो पणअपडिँग्गहस्स । ( इतिँ निष्क्रान्ते । ) ( ख )

**इरा०**—अँविस्ससणीआ पुरिसा । मएँ क्खुँ अत्तणो वञ्चणावअणं पमाणीकरिअँ वाहगदिरत्ताएँ हरिणीए विअ असंकिदाएँ एदं ण विण्णादं । ( ग )

---

( क ) बकुलावलिके त्वया साधूपक्रान्तम् । मालविके तावदिदानीं त्वं आर्यपुत्रं सफलप्रार्थनं कुरु ।

( ख ) प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ।

( ग ) अविश्वसनीयाः पुरुषाः । मया खल्वात्मनो वञ्चनावचनं प्रमाणीकृत्य व्याधगीतरक्तया हरिण्येवाशङ्कितयैतन्न विज्ञातम् ।

---

कर्मगृहीतेन कर्मणि चौर्यकर्मणि गृहीतेनापि कुम्भीरकेन चोरेण संधिच्छेदने । संधेः पिहितभूमिः संधिस्तस्य छेदेने भेदने । सुरङ्गकरण इत्यर्थः । शिक्षितः । अभ्यसितोऽस्मीति वक्तव्यं भवति । किमपि प्रतियोजय । उपपन्न

---

( १ ) B. G. T. add साहु. ( २ ) P. A. B. G. N. T. add तुए. ( ३ ) B. G. N. T. om. मालविए ता तुमं; A. P. दाव for दाणिं; B. G. दाणिं करेहि अज्जउत्तं सफलपत्थण. ( ४ ) Po. प्पसंगस्स ( प्रसंगस्य ). ( ५ ) P. A. om. इति. ( ६ ) P. A. add अहो. ( ७ ) B. G. N. T. om. ( ८ ).N. add अक्खित्ताए वाहजणगीदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं; B. G. T. अक्खित्ताए पिअधारिणीए हिअअसल्लं किदं । एव्वं ण विण्णादं मए वाहजणगीदगहीदचित्ताए अविसंकिदाए हरिणीए विअ विणासो त्ति । ( ९ ) N. वाहजणगीदगहीदचित्ताए; Pn. om. जण; ( १० ) N. om.

**विदू०**—( जनान्तिकम् । ) पंडिओजेहि दाणिं किंपि । कम्म- गहीदेणं कुम्भीलएण संधिच्छेअणसिक्खिओ ह्मि त्तिं वत्तव्वं होदि । ( क )

**राजा**—सुन्दरि न मे मालविकायां कश्चिदर्थः । मया त्वं चिरायसीति कथंचिदात्मा विनोदितः ।

**इरा०**—विस्ससणीओ सि । मए ण विण्णादं ईरिसं विणोदवत्थुअं अज्जउत्तेण उवलद्धं त्ति । अण्णहा मन्दभाइणीए एव्वं ण करीअदि । ( ख )

**विदू०**—मा दावं अत्तहोदी अत्तहोदो दाक्खिण्णस्स उअरोहं भणादु । समावत्तिदिट्ठेण देवीए परिअणेणं संकहा वि जइ अवराहो ट्ठावीअदि एत्थ तुमं एव्व पमाणं ( ग )

---

( क ) प्रतियोजयेदानीं किमपि । कर्मगृहीतेन कुम्भीलकेन संधि- च्छेदनाशिक्षकोऽस्मीति वक्तव्यं भवति ।

( ख ) विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रे- णोपलब्धमिति । अन्यथा मन्दभागिन्यैवं न क्रियते ।

( ग ) मा तावदत्रभवत्यत्रभवतो दाक्षिण्यस्योपरोधं भणतु । समा- पत्तिदृष्टेन देव्याः परिजनेन संकथापि यद्यपराधः स्थाप्यतेऽत्र त्वमेव प्रमाणम् ।

---

मनुपपन्नं वा उत्तर कुर्वित्यर्थः । विश्वसनीयोऽसीत्यत्र विपरितलक्षणानुसंधे-

---

( १ ) B. G. T. भो पडिवज्जेहि किंपि उत्तरं. ( २ ) N. add वि; B. G. T. किं ण भणइ । उदकान्दमूले विमहिले विमहिदेण ( उदकान्त- मूले विपथिके विमथितेन ) कुंभलिण्ण ( B. G. संदेसो रक्खिदव्वो त्ति ) ( T. संधिच्छेदो सिक्खिदव्वोत्ति ). ( ३ ) Po. A. add एत्थ. N. °छेअ &c. ( ४ ) B. G. N. T. मालविकया ( ५ ) B. G. N. T. add यथा°. ( ६ ) B. G. T. अविस्स°, ( ७ ) B. किं वि; P. A. एतारिसं. ( ८ ) N. दुक्खभा°; B. G. T. दुक्खव्वावारिणी एव्वं ण करेमि; Po A. दुक्खतरं एव्वं ( Po एव्व ) ण करेमि. ( ९ ) N. तावदा. ( १० ) N. तत्तभअदो. ( ११ ) B. G. भविदुं, N. भणिदुं. ( १२ ) B. G. T; समीवदिट्ठेण. ( १३ ) B. G. परिइत्थिअजणेण; T. परिअरित्थिआजणेण ( १४ ) Po. अवराहे, A. अव- राहो; T. वारिअदि; B. G. संकहा अहिसूआ ( B. अवराहो ) क्खमीअदु.

**इरा०**—णं संकहा णाम होदु । किंति[1] अत्ताणं आआसइस्सं । ( इति रुष्टा प्रस्थिता ) ( क )

**राजा**—( अनुसरन् । ) प्रसीदतु भवती ।

( इरावती रशनासंदितिचरणा[3] व्रजत्येव । )

**राजा**—सुन्दरि न शोभते प्रणयिजननिरपेक्षता[4] ।

**इरा०**—सठ अविस्ससणीअहिअओ सि । ( ख )

**राजा**—शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि[5] तां
विसृजसि मेखलयापि याचिता ॥ २० ॥

**इरा०**—इअं पि हदासा तुमं एव्व अणुसरादि । ( रशनामादाय राजानं ताडयितुमिच्छति । ) ( ग )

( क ) ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ।

( ख ) शठ अविश्वसनीयहृदयोऽसि ।

( ग ) इयमपि हताशा त्वामेवानुसरति ।

या ॥ मा तावदत्रभवतो दाक्षिण्यस्योपरोधं भणतु । **शठइत्यादि** । हे प्रिये परिचयवति परिचयः संस्तवो यस्य स परिचयवान् । अतिशायने मतुप् । तस्मिन्मयि शठ इति गूढविप्रियकारीति अवधीरणा तिरस्कारोऽस्तु । अतः ' अतिपरिचयादवज्ञा ' इति वदन्ति । तस्मादियमवधीरणा युक्तैवेत्यर्थः । हे चण्डि अत्यन्तकोपने चरणपतितया मेखलया रशनया याचि-

(१) केत्तिअ कालं. (२) N. रुषा. A. P. om. इति. ( ३ ) N. संदारित; B. G. T. संदानित. ( ४ ) P. A. प्रणयजननिरपेक्षता; N. प्रणयिनि जने &c. ( ५ ) P. A. चण्डतां; N. चण्डितां.

**राजा**—एषा[1]

**बाष्पासारा हेमकाञ्चीगुणेन**
**श्रोणीबिम्बादर्ध्यपेक्षाच्युतेन[2] ।**
**चण्डी चण्डं हन्तुमभ्युद्यता मां[3]**
**विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥**

**इरा०**—किं मं एव्वं[4] भूओ वि अवरद्धं[5] करेसि । [6]( इति सरशनं हस्तमालम्बते । ) ( क )

**राजा**—

**अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।**
**वर्धयसि विलसितं त्वं दासजनायात्र[7] कुप्यसि च ॥२२॥**

[8]नूनमिदानीम्[9]नुज्ञातम् । ( इति पादयोः पतति । )

---

( क ) किं मामेवं भूयोऽप्यपराद्धां करोषि ।

---

तापि प्रार्थितापि तामवधीरणां न विसृजसि न त्यजसि । किमिदं युक्तमिति शेषः ( सखीयाचनेन कोपत्यागस्योचितत्वेन कोपाभावे चावधीरणात्यागो युक्त एव । तन्नकरोषीत्यनुचितमिति भावः ) । **बाष्पासारेत्यादि** । बाष्प आसार इव यस्याः । श्रोणीबिम्बात् प्रशस्तनितम्बस्थानादुपेक्षया असावधानेन च्युतेन गलितेन विद्युद्दाम्ना विद्युन्मालयेव हेमकांचीगुणेन स्वर्णरशनया चण्डमुग्रं ( यथास्यात्तथा ) मेघराजीव मेघमालेव इयं चण्डी कोपना विन्ध्यं पर्वतमिव मां हन्तुमुद्यता उद्युक्ता) । किं मामेवं भूयोऽप्यपराद्धां करोषि । **अपराधिनीत्यादि** । स्पष्टोऽर्थः ॥ **नूनमित्यादि** । इदं तद्रशनासंहरणमनुज्ञात

---

( १ ) B. G. एषेरावती; P. वयस्यैरावती; N. इयमिरावती; A. यैषा. ( २ ) B. G. N. T. अन्युपेक्षा &c. ( ३ ) N. °ताहं. ( ४ ) P. A. om. ( ५ ) B. G. T. अवधीरिअं; A. अवरद्धं ( अपरोधं ) ( ६ ) B. G. N. T. read ( सरशनं हस्तमवलंबयति ) after राजा below. ( ७ ) N. अद्य. ( ८ ) P. add ( आत्मगतम् ). ( ९ ) N. इदम्.

**इरा०**—ण खु इमे मालविआएं चलणा जे दे हरिसंदोहलं पूरयिस्सन्ति। ( इति निष्कान्ता सचेटी[1]। ) ( क )

**विदू०**—भो उट्ठेहि उट्ठेहि[4]। किदप्पसादोसि। ( ख )

**राजा**—( उत्थाय इरावतीमपश्यन्। ) कथं गतैव प्रिया।

**विदू०**—वअस्स दिट्ठिआ इमस्स अविणअस्स अप्पसादिदा गदा। तं वअं सिग्घं अवक्कमाम जाव अङ्गारओ रासिं विअ सा अणुवक्कं[12] ण करेइ। (ग)

**राजा**—अहो मनसिजवैषम्यम्[13]।

**मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम्।**
**एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता॥ २३॥**

( इति निष्क्रान्तः सह वयस्येन। )[15]

**इति तृतीयोऽङ्कः।**

---

( क ) न खल्विमौ मालविकायाश्चरणौ यौ ते हर्षदोहदं पूरयिष्यतः।

( ख ) भो उत्तिष्ठ उत्तिष्ठ। कृतप्रसादोऽसि।

( ग ) वयस्य दिष्ट्या अस्याविनयस्याप्रसादिता गता। तदावां शीघ्रमपक्रमावः यावदङ्गारको राशिमिव सा अनुवक्रं न करोति।

---

मनुमतम्। मत्प्रार्थनया इति शेषः॥ वयस्य दिष्ट्या अनेनाविनयेनाप्रसन्ना गतैषा। तावदावां शीघ्रमेवापक्रमावः यावदङ्गारको राशिमिवानुवक्रं (प्रतिगमनं) प्रतीपं न करोति। **मन्य इत्यादि**। प्रियाहृतमना मालविकाहृतमनाः

---

( १ ) N. मालविआचलणा. ( २ ) Po परिस, Pn फरिस; A. हरिस. T. विसेसेण. ( ३ ) P. A. ( ससखी निष्कान्ता। ); N. सहचेट्या. ( ४ ) B. G. N. T. om. भो & om. उट्ठेहि. ( ५ ) B. G. T. अकिद &c. ( ६ ) B. G. हंत; T. तत्. ( ७ ) P. A. om. ( ८ ) N. अप्पसण्णा; B. G. T. अपप्पसारिदा. ( ९ ) N. add एसा. ( १० ) B. G. अत्तिणा, T. अहंदाव for ता वअं. ( ११ ) B. G. N. T. om. ( १२ ) N. add पडिगमणं. ( १३ ) N. T. मदनस्य; B. G. मदन°. ( १४ ) B. G. T. एवं प्रणयवती सा नहि शक्यम &c. ( १५ ) P. A. ( इति परिक्रम्य निष्क्रान्ताः सर्वे ) B. G. T. ( इति निक्रान्ताः सर्वे ).

प्रणिपातलङ्घनं प्रणामातिक्रमं तस्या इरावत्याः सेवामनुकूलाचरणं मन्ये । **सेवायाः फलमाह**—कुपिता क्रुद्धा प्रणयवती प्रेमवती सा इरावती एवमनेन क्रमेण प्रणिपातलङ्घनरूपेणोपेक्षितुमौदासीन्येन वर्तितुं शक्यं हि शक्या खलु । शक्यमिति निपातः ( तदतिक्रामिणीं प्रसादनविशेषं प्रणामाधिकामिति यावत् सेवां मन्ये तादृशी सेवैव प्रसादनाया अलं नान्येत्यर्थः । सा हि कुपितापि मयि प्रणयवती अत उपेक्षितुं तस्याः प्रसादनमिति शेषः न शक्यम् । ) अत्र बीजानुसंधानादाक्षेपो नाम संध्यङ्गमुक्तं भवति । इदमनुसंधानमेवोत्तराङ्ककथोपयोगित्वाद्बिन्दुरित्यनुसंधेयम् ।। इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने तृतीयोऽङ्कः ।।

———

## चतुर्थोऽङ्कः

( ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च । )

**राजा**—( आत्मगतम् )

**तामाश्रित्य श्रुतिपथगतामास्थया लब्धमूलः[1]**
**संप्राप्तायां नयनविषयं रूढरागः प्रवालः ।**
**हस्तस्पर्शे[2] मुकुलितः[3] इव व्यक्तरोमोद्गमत्वा[4]-**
**त्कुर्यात्क्लान्तं[5] मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥**

( प्रकाशम् । ) सखे गौतम ।

**प्रती॰**—जेदु[6] भट्टा । असंणिहिदो गोदमो । ( क )

**राजा**—( आत्मगतम् । ) अये[7] मालविकावृत्तान्तज्ञानार्थं प्रेषितः[8] ।

( प्रविश्य[9] )

**विदू॰**—वड्ढदु[10] भवं । ( ख )

---

( क ) जयतु भर्ता । असंनिहितो गौतमः ।

( ख ) वर्धताम् भवान् ।

---

कविरिदानिमङ्कान्तरमारभते—**ततः प्रविशतीत्यादिना । तामिति ।** मुकुलित इव संजातमुकुल इव कान्तं कामनायुक्तं कुर्यादिति प्रार्थनायां ( आशंसायां ) लिङ् । अत्र प्रमञ्जितं बीजं प्रकरीस्थाने कृतमिति मन्तव्यम् ॥ असंनिहितोऽत्र गौतमः ॥ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्ड-

---

( १ ) B. G. N. T. बद्धमूलः. ( २ ) B. G. N. T. स्पर्शैः. ( ३ ) B. G. T. कुसुमित. ( ४ ) P. रोमोद्गत°. ( ५ ) N. T. कांतं. ( ६ ) B. G. N. T. repeat जेदु. ( ७ ) B. G. N. T. आः. ( ८ ) N. T. add मया. ( ९ ) B. G. add विदूषकः. ( १० ) B. G. T. जेदु जेदु and P. A. जेदु.

**राजा**—जयसेने जानीहि क्क[1] देवी धारिणी कथं वा[2] सरुजचरण त्वाद्विनोद्यत इति ।

**प्रती०**—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) ( क )

**राजा**—सखे[3] को वृत्तान्तस्ते सख्यास्तत्रभवत्याः[4] ।

**विदू०**—जो बिडालगहीदाए परहुदिआए । ( ख )

**राजा**—( सविषादम् । ) कथमिव ।

**विदू०**—सा खु तवस्सिणी ताए पिङ्गलच्छिए सारभण्डभूघँरए[5] मिच्चुमुहे[6] विअ णिक्खित्ता । ( ग )

**राजा**—ननु मत्[7]संपर्कमुपलभ्य ।

**विदू०**—अह इं । ( घ )

---

( क ) यद्देव आज्ञापयति ।

( ख ) यो बिडालगृहीतायाः परभृतिकायाः ।

( ग ) सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे मृत्युमुख इव निक्षिप्ता ।

( घ ) अथ किम् ।

---

भूगृहे गुहायामिव निक्षिप्ता । शृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः पूर्वेद्युः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छका आगता ॥ तयोक्तम् ( ततस्तया व्याख्यातं । मन्दो वा उपचारो वा । यत्तव परिजनस्य वल्लभत्वं जानत्यपि पृच्छसीति ) । मन्दो व उपचारः ।

---

( १ ) N. add तावत् , B. G. तावत् । क्क वा देवी कथं वा &c, and T. तावत् । क्वासौ &c. ( २ ) B. G. N. T. om. कथं वा. ( ३ ) B. G. N. T. गौत्तम. ( ४ ) B. G. N. T. तत्रभवत्यास्तेसख्याः ( ५ ) A. Po. °भांडभूमि° and B. G. T. °भांडगेहमुहे परिक्खित्ता. ( ७ ) B. मे; ( मत्संबंधमुपलक्ष्य ).

**राजा**—गौतम[1] क एवं विमुखोऽस्माकं येन चण्डी कृता देवी।

**विदू०**—सुणादु भवं। परिव्वाजिआ[2] मे कहेइ। हिओ किल तत्त होदी इरावदी रुजाविहत्थ[3]चलणं देविं सुहंपुच्छिआ[4] आअदा। ( क )

**राजा**—ततस्ततः।[5]

**विदू०**—तदो सा देवीए पुच्छिदा। किं ण[6] लक्खिदो जणो वल्लहो त्ति। ताए उत्तं। मदो वा उवआरो वा जं दे परिअणस्स वल्लहत्तणं जाणन्ती वि पुच्छसी त्ति[7]। ( ख )

**राजा**—[8] निर्भेदादृतेऽपि[9] मालविकायामयमुपन्यासः शङ्कयति।

---

( क ) शृणोतु भवान्। परिव्राजिका मे कथयति। ह्यः किल तत्रभवतीरावती रुजाविहस्तचरणां देवीं सुखपृच्छकागता।

( ख ) ततः सा देव्या पृष्टा। किं न लक्षितो जनो वल्लभ इति। तयोक्तम्। मदो वा उपचारो वा यत्परिजनस्य वल्लभत्वं जानन्त्यपि पृच्छसीति।

---

यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते॥ निर्भेदादृतेऽपि स्फुटीकरणं विनापि॥ ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्था कृता। ( धारिणी ) राजाविनयमिरावत्याः सकाशाज्ज्ञातवतीत्यर्थः॥ किमतःपरम्।

---

( १ ) B. G. N. T. om. ( २ ) N. परिव्वाजिआए मे कहिदं. ( ३ ) N. रुअक्कंत° and B. G. T. रुजाअन्त° ( रुजायमान ). ( ४ ) B. G. T. Po. सुहं पुच्छिदुं. ( ५ ) P. omits this speech and reads the following speech of विदूषक in continuation with the above. ( ६ ) B. G. T. किं अत्तणो वि अणलंकिदो हिअअजणो वल्लहो त्ति। &. N. किं णु ओलोइदो वल्लहजणोत्ति. ( ७ ) Po A. मंदो वो उवआरो। जं दे परिअणस्स वल्लहत्तणं तं ण जाणसि त्ति। N. मंदो.. जं परिअणे संक्कंतं वत्तहत्तणं ण जाणीअदि, and B. G. T. तदो ताए उत्तम्मंतीए मंतिदम्. कुदो वा उवआरो जं परिअणे संक्कंतं वल्लहत्तणं जाणिस्सदि त्ति।. ( ८ ) Pn. add भो & T. अहो. ( ९ ) B. G. T. om. अपि.

**विदू०**—तदो ताए अणुबन्धिज्जमाणाए[1] भवदो अविणअं अन्तरेण परिगहीदत्थो[2] किदा देवी। (क)

**राजा**—अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय।

**विदू०**—अदोवरं किं[3]। मालविआ बउलावलिआ अ णिअलवदीओ अदिट्ठसुज्जपादं पादालवासं णाअकण्णआ विअ अणुहोन्ति। (ख)

**राजा**—कष्टम्[4]।

**मधुरस्वरा[5] परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ।**
**कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥**

वयस्य[6] अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्।

**विदू०**—कहं भविस्सदि। जं सारभाण्डघरए[7] वाउदा माहविआ देवीए संदिट्ठा। मम अङ्गुलीअमुद्दं[8] अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ[9] अ त्ति। (ग)

---

(क) ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्था कृता देवी।

(ख) अतः परं किम्। मालविका बकुलावलिका च निगलवत्यावदृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः।

(ग) कथं भविष्यति। यत्सारभाण्डगृहे व्यापृता माधविका देव्या संदिष्टा। ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति।

---

**मधुस्वरेत्यादि**। (मधुरस्वरा मधुरनादा परभृता कोकिला भ्रमरी च तत्तु-

---

(१) Po. णिबंधि &c and N. अणुखिज्जमाणा सा (२) B. G. T. परिगद. (३) N. किं अदो वरं, and B. G. T. किं अवरं. (४) B. G. N. repeat. (५) P. मधुररवा परभृतिका; मधुरस्वरा परभृतिः. (६) B. G. N. T. om.; P. वयस्याप्यत्रोपक्रमस्य कस्यचित् &c. (७) B. G. °भांडग्वावारिदा, and T. भांडगिहव्वावारिदा. (८) N. अंगुलीअअ &c. B. G. °मुद्दअं and T. मुद्दिअ. (९) Po. om.

**राजा**—( निःश्वस्य ) सखे किमत्र प्रतिकर्तव्यम् ।

**विदू०**—( विचिन्त्य । ) अत्थि एत्थ उवाओ । ( क )

**राजा**—क इव ।

**विदू०**—( सदृष्टिक्षेपम् । ) को वि अदिट्ठो सुणादि । कण्णे दे कहे-मि । ( [3] उपश्लिष्य कर्णे[4] । ) एव्वं विअ । ( इत्यावेदयति । ) ( ख )

**राजा**—( सहर्षम् [5] ) सुष्ठु चिन्तितम्[6] । [7] प्रयुज्यतां सिद्धये ।

( प्रविश्य )

**प्रती०**—देव पवादसअणे देवी णिसण्णा रत्तचन्दणधारिणी[8] परिअणहत्थगहीदेण[9] चलणेण भअवदीएँ[10] कहाहिं[11] विणोदिअमाणी[11] चिट्ठइ । ( ग )

**राजा**—[12] अस्मत्प्रवेशयोग्योऽयमवसरः ।[13]

---

( क ) अस्त्यत्रोपायः ।

( ख ) कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव ।

( ग ) देव प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगृहीतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

---

ल्ये मालविकाबकुलावलिके इत्यर्थात् विबुद्धचूतसंगिन्यौ विकासितसहकार-सक्ते मदाश्रिते इतिध्वनिः प्रबलपुरोवातया वृष्ट्या कोटरं वृक्षकोटरं त-

---

( १ ) B. G. N. T. add सपरामर्शम् . ( २ ) B. G. N. T. om. प्रति. ( ३ ) N. add इति. ( ४ ) B. G. T. om. कर्णे ( ५ ) A. P. om. ( ६ ) N. om चिंतितम्. ( ७ ) B. G. T. add ( B. G. अनुष्ठितं & T. अनुष्ठेयम् ). ( ८ ) B. G. T. °वारिणा. ( ९ ) B. G. N. T. हत्थगदेण. ( १० ) P. A. पडिग्वाजिआए. ( ११ ) B. G. T. Interchange. ( १२ ) B. G. T. add तस्मात्. and N. तेनहि. ( १३ ) B. G. T. °प्रयाण°.

**विदू०**---तां गच्छदु भवं । अहं वि देविं पेक्खिदुं अरित्तपाणी भविस्सं । ( क )

**राजा**---जयसेनायास्तावत्संवेद्य गच्छे ।

**विदू०**---( कर्णे । ) होदि एव्वं विअ । ( इत्यावेद्य निष्क्रान्तः । ) ( ख )

**राजा**---जयसेने प्रवातशयनमार्गमादेशय ।

**प्रती०**---इदो इदो देवो । ( ग )

( ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः )

**देवी**---भअवदि रमणिज्जं कहावत्थु । तदो तदो । ( घ )

**परि०**---( सदृष्टिक्षेपम् । ) देवि अतःपरं पुनः कथयिष्यामि । अत्र भवान्विदिशेश्वरः संप्राप्तः ।

**देवी**---अह्मो अज्जउत्तो । ( इत्युत्थातुमिच्छति । ) ( च )

---

( क ) तद्गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ।

( ख ) भवति एवमिव ।

( ग ) इत इतो देवः ।

( घ ) भगवति रमणीयं कथावस्तु । ततस्ततः ।

( च ) अहो आर्यपुत्रः ।

---

तुल्यं निबिडान्धकारं इति ध्वनिः । गमिते प्रापिते ) । अत्र राज्ञः कर्णे विदूषकोक्त उपायो नियमेन मालविकाप्राप्तिहेतुत्वान्नियताप्तिर्नाम चतुर्थी-

---

( १ ) B. G. T. मो. ( २ ) A. संगाद्य, B. G. T. संविदितं & N. अस्मद्रहस्यं विदितं कुरु. ( ३ ) B. G. N. T. तह । ( कर्णे ) एव्वं विअ होदि. ( ४ ) A. P. अदिरमणिज्जं. ( ५ ) T. अत्रभवान् विदिशेश्वरः and N. अत्र भगवान् विदिशेश्वरः. ( ६ ) B. G. N. T. भट्टा. ( ७ ) B. G. अभि for इति.

**राजा**—अलमलमुपचारयन्त्रणया ।

**अनुचितनूपुरविरहं नार्हसि तपनीयपीठकालम्बि ।**

**चरणं रुजा परीतं कलभाषिणि मांच पीडयितुम् ॥ ३ ॥**

**परि०**—विजयतां देवः। [२]

**धारिणी**—जेदु अज्जउत्तो । [२] ( क )

**राजा**—( परिव्राजिकां प्रणम्योपविश्य [३] । ) देवि अपि सह्या वेदना ।

**धारिणी**—[४]अत्थि मे[६] विसेसो । ( ख )

( ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः । )

**विदू०**—परित्ताअदु परित्ताअदु भवं । सप्पेण[७] दट्ठोह्मि । ( ग )

( सर्वे विषण्णाः । )

**राजा**—कष्टम् [८] । क्व भवान्परिभ्रान्तः ।

---

( क ) जयत्वार्यपुत्रः ।

( ख ) अस्ति मे विशेषः ।

( ग ) परित्रायतां परित्रायतां भवान् । सर्पेण दष्टोऽस्मि ।

---

वस्था सूचिता । अत्र पूर्वं प्रकरीस्थानोक्तबीजस्यानया नियताप्त्या समन्वयादवमर्शोनाम चतुर्थसंधिः प्रतिपादित इति मन्तव्यम् ॥ परिजनहस्तगतेन चरणेन । अहो भर्ता ॥ **अनुचितेति** ( अनुचितनूपुरविरहं सतत परिचितनूपुरसंगमित्यर्थः । रुजा परीतं रोगव्याप्तं चरणं तद्दर्शनेन रोगाक्रान्तं मां च पीडयितुं नार्हसि ) । अद्यास्ति मे विशेषः ॥ तत इति ।

---

( १ ) B. G. N. T. पीठिका°. ( २ ) B. G. N. T. Interchange the speeches. ( ३ ) B. G. T. add च. ( ४ ) Pn. add. ते. ( ५ ) N. add अज्ज ( ६ ) P. add दाणिं. ( ७ ) Po. A. अविहा सप्पेण संदट्ठोह्मि, and B. G. T. सप्पेणह्मि दट्ठो. ( ८ ) B. G. N. T. repeat.

**विदू०**—देविं देक्खिस्सं[1] त्ति आआरपुप्फग्गहणकालणादो पमदवणं गदोह्मि।[3] (क)

**देवी**—हद्धी हद्धी[4]। अहं एव्व बह्मणस्स जीविदसंसअणिमित्तं जादा। (ख)

**विदू०**—तहिं असोअत्थवअस्सं[6] कालणादो मएं पसारिदे दक्खिणहत्थे[8] कोडरणिग्गदेण कालेणं सप्परूविणीं[10] दठ्ठोह्मि। णं एदाइं दुवे दंतपदाइं। (इति दंशं दर्शयति।) (ग)

**परि०**—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते। स तावदस्य क्रियताम्[12]।

[13]**छेदो दंशस्य दाहो वा क्षतेर्वारक्तमोक्षणम्[14]।**
**एतानि दष्टमात्राणामायुष्याः[15] प्रतिपत्तयः ॥ ४ ॥**

---

(क) देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि।

(ख) हा धिक् हा धिक्। अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जाता।

(ग) तस्मिन्नशोकस्तबकस्य कारणान्मया प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन कालेन सर्परूपिणा दष्टोऽस्मि। नन्वेते द्वे दन्तपदे।

---

यज्ञोपवीतेन बद्धोऽङ्गुष्ठो यस्य स तथोक्तः। अत्र कपटकल्पनाया गम्यमानत्वाच्छलनं नाम संध्यङ्गमुक्तं भवति॥ तस्मिन्नशोकस्तबककारणात्प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। **छेदो दंशस्ये॰**

---

(१) दक्खिस्सं त्ति. (२) B. G. T. om ग्गहण. (३) P. add परित्ताअदु परित्ताअदु. (४) A. om. (५) Po संसए &c. N. जादाह्मि and B. G. T. जादा बह्मणस्स. (६) B. G. T. असोअत्थपुप्फकाल°. and N. त्थवअका°. (७) N. om. (८) B. G. T. पसारिदो दक्खिणहत्थो। तदो &c. (९) P. अग्गहत्थे, A. हत्थे, (१०) B. G. T. Interchange. N. सप्परूवेण कालेण. (११) B. G. N. T. णं एदाणि दुवे दंसणपदाणि (B. G. om. दसण). (१२) B. G. T. om तेन... क्रियताम. (१३) A. reads the verse and the following and P only the following first in the king's speech below. (१४) N. मोचनम्. (१५) P. आयुषः.

संप्रति विषवैद्यानां कर्म।

**राजा**—जयसेने क्षिप्रमानीयतां ध्रुवसिद्धिः[१]।

**प्रती०**—जं देवो आणवेदि। ( इति निष्क्रान्ता।) ( क )

**विदू०**—अहो पावेण मिच्चुणा गहीदोह्मि ( ख )

**राजा**—मा कातरो भूः। अविषो[२]ऽपि कदाचिद्दंशो भवेत्।

**विदू०**—कहं ण भाइस्सं[३]। सिमसिमाअन्ति मे अङ्गाइं। ( [४]विषवेगं रूपयति।) ( ग )

**देवी**—[५]ही ही आहिअं दंसिदं विआरेण। हला अवलम्भह णं। (घ)

( परिजनः[६] ससंभ्रममवलम्बते )

**विदू०**—( राजानं विलोक्य।) भोः भवदो बा[७]लत्तणादो पिअवअस्सो ह्मि। तं विआरिअ अपुत्ताए मे जणणीए जोअक्खेमं वहेहि। ( च )

---

( क ) यद्देव आज्ञापयति।

( ख ) अहो पापेन मृत्युना गृहीतोऽस्मि।

( ग ) कथं न भेष्यामि। सिमिसिमायन्ति मेऽङ्गानि।

( घ ) हीही आधिक्यं दर्शितं विकारेण। हला अवलम्बध्वमेनम्।

( च ) भोः भवतो बाल्यात् प्रियवयस्योऽस्मि। तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह।

---

१ इयादि। ध्रुवसिद्धिरिति तस्य वैद्यस्य नाम ॥ अनेन संतापः सूच्यते।

---

( १ ) B. G. N. T. Interchanges. ( २ ) P. om. अपि. (३) A. interprets भाइस्सं by भविष्यामि. (४) B. G. N. T. add इति. ( ५ ) B. G. T. हा हा दंसिदं विआरेण। अवलंबध णं। ( T. बह्मणं for णं ) N. हा दंसिदं असुहं विआरेण ( दर्शितमशुभं विकारेण अवलंबध बह्मणं and P. हीही असुहं दंसिदं ( असुखं दृष्टं &c.) .. अवलबह णं. (६) N. T. परिव्राजिका & B. G. पारिपार्श्विका. ( ७ ) B. G. T. भो बालप्पिअवअस्सोह्मि दे (T. तुए)। अविआरेण ( अविकारेण ) अपुत्ताए जणणीए &c। N. भो बह्मादोपि &c. ( ८ ) A. मुग्धाए and Po मुग्धाए मे.

**राजा**—मा भैषीः[1]। अचिरात्त्वां वैद्यश्चिकित्सते[2]। स्थिरी भव।

( प्रविश्य )

**जय॰**—देव आणविदो[4] ध्रुवसिद्धि विण्णवेदि। इह एव्व आणीअदु गोदमो त्ति। ( क )

**राजा**—तेन हि वर्षधरप्रति[6]गृहीतमेनं तत्रभवतः सकाशं प्रापय।

**जय॰**—तहा। ( ख )

**विदू॰**—( देवीं विलोक्य। ) भोदि जिवेअं वा ण वा। जं मए अत्तभवन्तं सेवमाणेण दे अवरद्धं तं मॅरिसेहि। ( ग )

**देवी**—दीहाऊ होहि। ( घ )

( निष्क्रान्तौ[8] विदूषकः प्रतीहारी च। )

**राजा**—प्रकृतिभीरुस्तपस्वी। [9]ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते।

---

( क ) देव आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति। इहैवानीयतां गौतम इति।

( ख ) तथा।

( ग ) भवति जीवेयं वा न वा। यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व।

( घ ) दीर्घायुर्भव।

---

विषवेगं विषप्राप्तिं रूपयति प्रकाशयति। विषावेगास्तु वसन्तराजीये कथिताः—

---

( १ ) N. add गौतम. and take स्थिरोभव here after it. ( २ ) N. T. चिकित्सिष्यति and B. G. चिकित्सयिष्यति. ( ३ ) A. P. प्रतिहारी all through. ( ४ ) A. P. om. ( ५ ) N. add सो. (६) P. वर्षवर परि॰ & N. om. वर्षधर. ( ७ ) Po add तं सव्वं. ( ८ ) N. निष्क्रान्तौ. ( ९ ) Pn. A. ध्रुव.. सिध्दिं मन्ये. N. ध्रुवसिध्दिमपि यथार्थ नामानं सिध्दिमंतं न मन्यते.

**जय०**—जेदु भट्टा । धुवसिद्धी विण्णवेदि । उदकुम्भविहाणेण[1] सप्प मुद्दिअं किंपि कप्पइदव्वं । तं अण्णेसीअदु त्ति । ( क )

**देवी**—इदं सप्पमुद्दिअं अङ्गुलीअअं । पच्छा मम हत्थे देहि णं ( ख )

( इति प्रयच्छति । )[2]

**राजा**—जयसेने[3] कर्मसिद्धावाशु प्रतिपत्तिमानय ।

**प्रती०**—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) ( ग )

**परि०**—यथा मे[4] हृदयमाचष्टे तथा निर्विषो गौतमः ।

**राजा**—भूयादेवम् ।

( प्रविश्य )

**जय०**—जेदु[5] भट्टो[6] । णिवुत्तविसवेगो गोदमो मुहुत्तेण[7] पकिदित्थो संवुत्तो । ( घ )

---

( क ) जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति । उदकुम्भविधानेन सर्प-मुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ।

( ख ) इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देह्येतत् ।

( ग ) यद्देव आज्ञापयति ।

( घ ) जयतु भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ।

---

' वैवर्ण्यं वेपथुर्दाहः फेनः स्कंदस्य भञ्जनम् । दुःखं जाड्यं मृतिश्चेति विषवेगाः स्युरष्टधा ॥ ' यन्मया तत्रभवन्तं सेवमानेन अपराद्धं तन्मृष्यताम्

---

( १ ) B. G. N. T. Pn. विहाणे । सप्पमुद्दिअं कंपिअण्णेसीअदु । . (२) B. G. T. om. & N. इति अंगुलीयक ददाति and add प्रतिहारी गृहीत्वा प्रस्थिता. ( ३ ) N. om. ( ४ ) B. G. T. om. मे. ( ५ ) B. G. T. repeat. ( ६ ) N. देवो. ( ७ ) Pn. णिवुत्त.. गोत्तमो । मुहुत्तएण पकिदित्थ एव्व संवुत्तो. Po. A. णिवुत्त... गोत्तमो पकिदित्थएव्व &c.

**देवी**—दिट्ठिआ वेअणाआदो मुत्तह्मि ( क )

**प्रती०**—एसो उण अमच्चो वाहतओ विण्णवेदि । राअकज्जं बहु मन्तिदव्वं । तं दंसणेण अणुग्गहं इच्छामि त्ति । ( ख )

**देवी**—गच्छदु अज्जउत्तो कज्जसिद्धीए । ( ग )

**राजा**—आतपाक्रान्तोऽयमुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनीयम् ।

**देवी**—बालिआओ अज्जउत्तवअणं अणुचिट्ठह । ( घ )

**परिजनः**—तहाँ । ( च )

( इति निष्क्रान्ता देवी परिव्राजिका परिजनश्च । )

**राजा**—जयसेने गूढेन पथा मां प्रमदवनं प्रापय ।

**प्रती०**—इदो इदो देवो । ( छ )

**राजा**—जयसेने समाप्तकृत्यो ननु गौतमः ।

---

( क ) दिष्ट्या वचनीयान्मुक्तास्मि ।

( ख ) एष पुनरमात्यो वाहतको विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यम् । दर्शनेनानुग्रहमिच्छामीति ।

( ग ) गच्छत्वार्यपुत्रः कार्यसिद्धये ।

( घ ) बालिका आर्यपुत्रवचनमनुतिष्ठत ।

( च ) तथा ।

( छ ) इत इतो देवः ।

---

इति ॥ दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम् ॥ विवृत्तविषवेगो

---

( १ ) N. om. ( २ ) B G. N. T. om. ( ३ ) B. G. om. च. ( ४ ) N. G. शयनम् ( ५ ) B. G. T. पालिआ, N. बालिआओ and A. बालिशा. ( ६ ) अज्जउत्तस्स सदेसं. (७) add ( परिजनस्तथा प्रक्रान्तः ). ( ८ ) N. om. इति ( ९ ) Pn. गुढपथेन. A. B. G. T. Po om. मां. ( १० ) B. G. T. °काम्यो. & N. करणीयो.

**प्रती॰**—अह इं । ( क )

**राजा**—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
संदिग्धमेव सिद्धौ कातरमाशङ्कते चेतः ॥ ५ ॥

( प्रविश्य )

**विदू॰**—वड्ढदु भवं । सिद्धाइं दे मङ्गलकज्जाइं[3] । ( ख )

**राजा**—जयसेने त्वमपि नियोगमशून्यं कुरु ।

**प्रती॰**—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) ( ग )

**राजा**—वयस्य[4] क्षुद्रा माधविका । न खलु किंचिद्विचारितमनया ।

**विदू॰**—देवीए अङ्गुलीअअमुद्दं[5] देक्खिअ कहं विआरीअदि । (घ)

**राजा**—न खलु मुद्रामधिकृत्य ब्रवीमि । एतयोर्बद्धयो[6]: किं निमित्तोऽयं[7] मोक्षः । किं[8] देव्याः परिजनमतिक्रम्य भवान्संदिष्ट इत्येवमनया प्रष्टव्यम् ।

**विदू॰**—णं पुच्छिदोह्मि । पुणो मन्दस्सवि मे तस्सिं पच्चुप्पण्णा मदी[9] । ( च )

---

( क ) अथ किम् ।

( ख ) वर्धतां भवान् । सिद्धानि ते मङ्गलकार्याणि ।

( ग ) यद्देव आज्ञापयति ।

( घ ) देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति ।

( च ) ननु पृष्टोऽस्मि । पुनर्मन्दस्यापि मे तस्मिन्प्रत्युत्पन्ना मतिः ।

---

गौतमो मुहूर्तमात्रेण प्रकृतिस्थः संवृत्तः ॥ **इष्टाधिगमेत्यादि** । ( इष्टस्या

---

( १ ) N. हृदयम. ( २ ) P. A. जेदु & B. G. T. repeat. ( ३ ) B. G. T. °कम्माइं; ( मम कज्जाइं ). ( ४ ) B. G. N. T. गौतम. ( ५ ) B. G. N. T. मुद्दिअं. ( ६ ) B. G. T. तयोर्द्वयोः & N. एतयोर्द्वयोः ( ७ ) B. G. N. T. om. अयं. ( ८ ) B. G. N. T. किंवा. ( ९ ) B. G. T. मंदस्सवि पुणो मे तह पच्चुप्पण्णं उत्तरं आसि, P. पच्चुप्पण्णबुद्धिणा मए कहिदं, A. पच्चुसरपच्चुप्पण्णबुद्धिणा मए कहिदं.

**राजा**—कथ्यताम्[1] ।

**विदू०**—भणिदा[2] मए । देव्वचिन्तएहिं विण्णाविदो राआ । सोवसग्गं वो णक्खत्तं । सव्वबन्धणमोक्खो करीअदु त्ति । ( क )

**राजा**—ततस्ततः[3] ।

**विदू०**—तं सुणिअ देवीए इरावदीचित्तं रक्खन्तीए राआ किल मोएदित्ति अहं संदिट्ठो त्ति । तदो जुज्जइदि त्ति ताए संपादिदो अत्थो । (ख)

**राजा**—( विदूषकं परिष्वज्य । ) सखे प्रियोऽहं तव ।

**नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।**
**कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते[4] ॥ ६ ॥**

---

( क ) भणिता मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । सर्वबन्धनमोक्षः क्रियतामिति ।

( ख ) तच्छ्रुत्वा देव्येरावतीचित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति । ततो युज्यत इति तया संपादितोऽर्थः ।

---

धिगमे प्राप्तौ निमित्तं कारणं एकान्तसाध्यं निःसन्देहेन संभवदुत्पत्तिकसाध्यमेव रूपमपि प्रयुज्यत इति प्रयोग उपायस्तं सिद्धयै साध्यनिष्पादनाय संदिग्धमेव कार्यं स्यान्नवेति कृतसंदेहं मत्वा चेतः कातरं यथा तथा आशङ्कते ॥ पुनर्मन्दस्य मे तस्मिन्प्रत्युत्पन्ना मतिः ॥ ( पुनर्मन्देनापि प्रत्युत्पन्नबुद्धिना मया कथितम् । उपसर्गेण ज्योतिषोक्तक्रूरग्रहवेधसूचितदैवोपद्रवेण सहितमित्यर्थः । ) । **नहि बुद्धीत्यादि** । ( सुहृदां बुद्धिगुणेनैव अर्थदर्शनं न किन्तु स्नेहेनैव सूक्ष्मः हठादनुद्भावनीयः कार्यसिद्धिपथः अभीष्टसिद्धे

---

( १ ) A. P. omit the speech and read the following in continuation with the above speech of विदूषकः. ( २ ) T. भणिदं and A. P. om. भणिदा मए. ( ३ ) B. G. A. P. omit the speech and read the following speech of विदूषक in continuation with the above. ( ४ ) A. उपलक्ष्यते.

**विदू०**—तुवरदु भवं। समुद्दघरए ससहिं[1] मालविअं ठाविअ भवन्तं पच्चुग्गदोह्मि। (क)

**राजा**—अहमेनां संभावयामि। गच्छाग्रतः।

**विदू०**—एदु भवं। (परिक्रम्य।) इदं समुद्दघरअं[2]। (ख)

**राजा**—(साशङ्कम्।) वयस्य एषा कुसुमावचयव्यग्रहस्ता सख्यास्त इरावत्याः[3] परिचारिका चन्द्रिका समागच्छति[4]। इतस्तावदावां भित्तिगूढौ भवावः।

**विदू०**—कुम्भीलएहिं कामुएहिं अ[5] पडिहलणीआ खु चन्दिआ। (ग)

(उभौ यथोक्तं[6] कुरुतः।)

**राजा**—गौतम कथं नु ते सखी मां प्रतिपालयति। एहि। एनां गवाक्षमाश्रित्य विलोकयामि।

**विदू०**—तह। (घ)

(उभौ[7] विलोकयन्तौ स्थितौ[8]।)

(ततः प्रविशति मालविका बकुलावलिका च।)

---

(क) त्वरतां भवान्। समुद्रगृहे ससखीं मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि।

(ख) एतु भवान्। इदं समुद्रगृहम्।

(ग) कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका।

(घ) तथा।

---

रूपाय उपलभ्यते उद्भाव्यते इत्यर्थः)। सखी सहितां। अहो इत्यामन्त्रणे।

---

(१) B. G. N. T. सहीसहिदं. (२) B. G. T. गेहकं. (३) N. om. इरावत्याः. (४) B. G. N T. संनिकृष्टमागच्छति. (५) B. G. N. T. add अहो. (६) A. om. (७) B. G. T. यथासमर्थितं. (८) A. om. (९) N. तिष्ठतः.

**बकु०**—सहि पणम भट्टारं । जो पस्सदो पिट्ठदो देक्खीअदि ।
( क )

**राजा**—मन्ये प्रतिकृतिं मे दर्शयति ।

**माल०**—( सहर्षं ) णमो दे । ( द्वारमवलोक्य सविषादं । ) हला मं विप्पलम्भेसि । ( ख )

**राजा**—सखे हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ।

**सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।**
**वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥**

**बकु०**—णं एसो चित्तगदो भट्टा । ( ग )

**उभे**—( प्रणिपत्य । ) जेदु भट्टा । ( घ )

---

( क ) सखि प्रणम भर्तारम् । यो पार्श्वतः पृष्ठतः दृश्यते ।

( ख ) नमस्ते । सखि मां विप्रलम्भयसि ।

( ग ) नन्वेष चित्रगतो भर्ता ।

( घ ) जयतु भर्ता ।

---

**सूर्योदय इत्यादि** । ( पुंडरीकस्य पद्मस्य सूर्योदये यावस्था विकाशरूपा सूर्यास्तमये च या संकोचरूपावस्था भवति ते विकाशसंकोचात्मिके द्वे समवस्थे सुवदनाया मालविकाया वदनेन क्षणादूढे धृते ) । सखि तदा

---

( १ ) Pn om. the sentence ; and B. G. T. read it after णमो दे along with मालविका's speech. ( २ ) 'B. G. N. T. om. and read after 'णमो दे । '' राजा—शङ्के मे प्रतिकृतिं निर्दिशति । ( ३ ) B. G. N. T. om. ( ४ ) B. G. T. add जोपस्सदो ( T. add पिट्ठदो ) देक्खीअदि; B. G. N. T. मालविका—( सहर्षं द्वारमवलोक्य ) &c. ( ५ ) Pn Interchange. ( ६ ) B. G. N. T. om.

**माल०**—हला तदा ससंभमं उक्कंठिआ अहं भट्टिणो रूवदंसणेण तह ण वितिण्हह्मि जह अज्ज विभाविदो चित्तगददंसणो भट्टा। ( क )

**विदू०**—सुदं भवदा। अत्तहोदी चित्ते जह दिट्ठो भवं तह अदिट्ठो त्ति मन्तेदि। मुधा दाणिं मञ्जुसा विअ रअणभण्डं जोव्वणगव्वं वहेसि।
( ख )

**राजा**—सखे कुतूहलवानपि निसर्गशालीनः स्त्रीजनः। पश्य।

**कार्त्स्न्येन निर्वर्णयितुं च रूप-**
**मिच्छन्ति तत्पूर्वसमागतानाम्³।**

---

( क ) सखि तदा ससंभ्रममुत्कंठिता अहं भर्तृरूपदर्शनेन तथा न वितृष्णास्मि यथाद्य विभावितश्चित्रगतदर्शनो भर्ता।

( ख ) श्रुतं भवता। अत्रभवती चित्रे यथा दृष्टो भवांस्तथाऽदृष्ट इति मन्त्रयते। मुधेदानीं मञ्जुषेव रत्नभाण्डं यौवनगर्वं वहसि।

---

संभ्रमदृष्टे भर्तृरूपे यथा न वितृष्णास्मि तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता ( सखि ससंभ्रमदृष्टे भर्तृरूपे यथा सतृष्णास्मि तथा अद्यापि मया न विभावितो वितृष्णदर्शनो भर्ता ) ॥ तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयते ( तत्रभवती चित्रे यथा दृष्टो न तथा दृष्टो भवान् इति मन्त्रयते )। **कार्त्स्न्येनेत्यादि।** ( प्रियेषु तद्दर्शनायेत्यर्थः।

---

( १ ) B. G. T. तहिंसंभमेट्टिदा भट्टिणो रूवस्स ण तह वितिण्हह्मि जह अज्ज मए भाविदो अवितिण्हदंसणो भट्टा.। Pn हला तदा समुहट्टिदा भट्टिणो रूवस्स ण तह वितिण्हह्मि जह अज्ज विभाविदो चित्तगददंसणो भट्टा। Po हला तदा संमुहट्टीदा अहं भट्टिणो रूवदंसणेण तह ण वितिण्हह्मि जह अज्ज विभाविदो चित्तगदो एव्व भट्टा। N. हला तदा संभमदिट्ठे भट्टिणो रूवे जह ण वितिण्हह्मि तह अज्जवि मए भाविदो अवितिण्हदंसणो भट्टा. ( २ ) P. सुदं भवदा। अत्तहोदीए दिट्ठो जह चित्तेण तह दिट्ठो भवं त्ति मन्तिदं। B. G. T. सुद भवदा। ण किं अत्तहोदी तुए जह दिट्ठो तह ण दिट्ठो भवं &c. N. सुदं भवदा। तत्तहोदी चित्ते जह दिट्ठो तह दिट्ठो भवं ति मन्तेदि।. ( ३ ) B. G. N. T. °समागमानाम्.

न च[1] प्रियेष्वायतलोचनानां
समग्रपातीनि[2] विलोचनानि ॥ ८ ॥

**माल०**—हला का एसा ईसिप्परिउत्तवअणा[3] भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईआदि । ( क )

**बकु०**—णं इअं पस्सगदा इरावदी । ( ख )

**माल०**—सहि अदक्खिणो विअ भट्टा मे[4] पडिभादि । जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो । ( ग )

**बकु०**—( आत्मगतम् ) चित्तगदं भट्टारं परमत्थदो[5] गेण्हिअ[6] असूएदि । होदु । कीलिस्सं दाव एदाए । ( प्रकाशम् । ) हला[7] भट्टिणो वल्लहा एसा । ( घ )

**माल०**—तदो किं दाणिं अत्ताणं आआसेमि[8] । (सासूयं परावर्तते ।) ( च )

---

( क ) सखि कैषा ईषत्परिवृत्तवदना भर्त्रा स्निग्धया दृष्ट्या निध्यायते ।

( ख ) नन्वियं पार्श्वगतेरावती ।

( ग ) सखि अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः ।

( घ ) चित्रगतं भर्तारं परमार्थतो गृहीत्वासूयति । भवतु । क्रीडिष्यामि तावदेतया । सखि भर्तुर्वल्लभैषा ।

( च ) ततः किमिदानीमात्मानमायासयिष्यामि ।

---

आयतलोचनानां व्यापारितनेत्राणां स्त्रीणामिति शेषः । विलोचनानि तत्पूर्व

---

( १ ) T. नतु; B G. ननु. ( २ ) B. G. °वर्तीनि, N. I. वृत्तीनि. ( ३ ) पासपरिवत्तिदवदणेण. ( ४ ) B. G. T. Interchange, and P. om. भट्टा. ( ५ ) P. परमत्थ. ( ६ ) B. G N. T. संकप्पिअ. ( ७ ) P. A. om. ( ८ ) B. N, G. T. आआसिअ.

—सखे पश्य ।

**भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं**
**सासूयमाननमितः परिवर्तयन्त्या ।**
**कान्तापराधकुपितेष्वनया विनेतुः**
**संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥**

०—अणुणअसज्जो दाणिं होहि । ( क )

०—अज्जगोदमो एत्थ एव्वं सेवदि णं । ( पुनः स्थानान्तराभि-तुमिच्छति । ) ( ख )

०—( मालविकां रुद्ध्वा । ) ण खु कुविदा दाणिं तुमं । ( ग )

**माल०**—जइ चिरं कुविदं एव्वं मं मण्णेसि एसो पच्चाणीअदि कोवो । ( घ )

---

( क ) अनुनयसज्ज इदानीं भव ।

( ख ) आर्यगौतमोऽत्रैव सेवते ननु ।

( ग ) न खलु कुपितेदानीं त्वम् ।

( घ ) यदि चिरं कुपितामेव मां मन्यसे एष प्रत्यानीयते कोपः ।

---

समागमानां स एव पूर्वः । तैः नेत्रैः पूर्वः ) समागमो येषां कृतप्रथमदर्शनानां प्रियाणामित्यर्थः । रूपं लावण्यं कात्स्न्येन समग्रवृत्त्या निर्वर्णयितुं द्रष्टुमिच्छन्ति सोत्सुकानि किंतु समग्रवृत्तीनि संपूर्णव्यापारवन्ति न भवन्तीति शेषः । इष्टविषयदर्शने औत्सुक्ये सत्यपि समग्रतया स्त्रियो न पश्यन्ति लज्जाशीलत्वादिति भावः । ) पार्श्वपरिवृत्तवदना । चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । **भ्रूभङ्गेत्यादि** । ( विनेतुः शिक्षकस्य इति कर्तरिषष्ठी । कान्तापराधकुपितेषु कान्तस्य योऽपराधः अन्यस्त्रीसंगमादिकृता

---

( १ ) B. G. विषयेप्यनया. ( २ ) B. G. T. पच्छा; N. एत्थ णं संसेवदि. ( ३ ) P. A. om.

**राजा**—( उपेत्य । )

**कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेव मयि ।**
**ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥**

**बकु०**—जेदु भट्टा ( क )

**माल०**—( आत्मगतम् । ) कहं चित्तगदो भट्टा मए असूइदो । ( व्रीडवदनमञ्जलिं करोति । ) ( ख )

( राजा मदनकातर्यं रूपयति । )

**विदू०**—किं भवं उदासीनो विअ । ( ग )

**राजा**—अविश्वसनीयत्वात्सख्यास्तव ।

**विदू०**—अत्तहोदीए अअं तुह अविस्सासो । ( घ )

**राजा**—श्रूयताम् ।

---

( क ) जयतु भर्ता ।

( ख ) कथं चित्रगतो भर्ता मयासूयितः ।

( ग ) किं भवानुदासीन इव ।

( घ ) अत्रभवत्यामयं तवाविश्वासः ।

---

पराधस्तत्र कुपितेषु नपुंसके भावे क्तः । ललिताभिनयस्य मनोहरस्य कोपव्यंजकचेष्टाविशेषस्य कर्मणि षष्ठी । शिक्षा उपदेशोऽनया मालविकया संदर्शितेव तत्र हेतुगर्भविशेषणं पूर्वार्धं ) । **कुप्यसीत्यादि** । ( चित्रार्पितचेष्टया किं कस्मात् कुप्यसि मह्यमिति शेषः । ननु अहं साक्षा- दनन्यसाधारण एकभक्तिकः इत्यर्थः तव दासः ) । [illegible]

---

( १ ) B. G. T. कथय किमिदं मे &. N. किमेतन्मे [illegible] P. A. किमेव मयि. ( २ ) N. ( इति सप्रणयवदनं &c. [illegible] प्रकाशं । सव्रीडवदनं. ( ३ ) P. A. निरूपयति. ( ४ ) B. [illegible] अअं तुह; P. A. मा दाव अत्तहोदीअं तुह &c.

नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणात्
ते सहसा बाहोर्ध्यं गतापि सखी तव ।
तेजरुजा क्लिष्टस्यैवं समागममायया
व सखे विश्रब्धं स्यादिमां प्रति मे मनः ॥ १२ ॥

सहि बहुसो किल भट्टा विप्पलद्धो । दाणिं दाव अत्ता वि-
रीअदु । ( क )

-सहि मह उण मन्दभग्गाए सिविणसमाअमो वि भट्टिणो
( ख )

भट्टा देहि से उत्तरं । ( ग )

ग किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
स्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२ ॥

---

खि बहुशः किल भर्ता विप्रलब्धः । इदानीं तावदात्मा वि-
ाम् ।

व मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ

देह्यस्या उत्तरम् ।

---

ाक्ये काकुरनुसंधेया ॥ **पथि नयनयोरित्यादि** । उ-
प्रतारणेन अविश्वासकारणाचरणादिमां मालविकां प्रति मे
ं विश्वस्तं स्यादपि तु कथमपि न । प्रतारिकायाः प्रतारणा-
विश्वासस्यैव युक्तत्वादिति भावः । **उत्तरेणेत्यादि** ।

---

(१) P A, स्वमे. (२) P. A. B. G. अबला सती. (३) B. G. T. कथमपि. (४) N. विस्रब्धं (५) B. G. T. ता for दाणिं दाव; Po दाव एत्थ &c.; A. दावआथं &c.; (६) B. G. T add एतु. (७) N. कहेहि.

**बकु०**—अणुगहीदह्मि । ( क )

**विदू०**—( परिक्रम्य । ससंभ्रमम्[1] । ) बउलावलिए एसो बालासोअ-रुक्खस्स पल्लवाइं लङ्घेदि[2] हरिणो । एहि[3] णिवारेम णं । ( ख )

**बकु०**—तह । ( इति[4] प्रस्थिता । ) ( ग )

**राजा**—वयस्य[5] एवमेवास्मिन्रक्षणेऽवहितेन त्वया भवितव्यम्[6] ।

**विदू०**—एवं[7] वि[8] गोदमो संदिस्सीअदि[9][10] । ( घ )

**बकु०**[11]—अज्ज गोदम अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ[12] होहि । ( च )

**विदू०**—जुज्जइ । ( छ )

---

( क ) अनुगृहीताः स्मः ।

( ख ) बकुलावलिके एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि निवारयाम एनम् ।

( ग ) तथा ।

( घ ) एवमपि गौतमः संदिश्यते ।

( च ) आर्य गौतम अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।

( छ ) युज्यते ।

---

[ उत्तरेण किं उत्तरसाध्यं नास्ति । पंचबाण एवाग्निस्तापकत्वात् साक्षी यत्र तद्यथा तथा अनेनाग्निसाक्षिकत्वेन दुर्भेद्यता दर्शिता । मया इदानीं

---

( १ ) N. om. ( २ ) B. G. T. असोअपल्लवाइं. ( ३ ) P. A. लंघिदुं आअच्छेदि, B. G. T. अहि लंघिदुं इच्छेदि. (४) N. om.; P. A. ता एहि. ( ५ ) omit this and the two following speeches. ( ६ ) A. P. om. ( ७ ) B. G. N. T. एवमस्मद्रक्षणक्षणे &c. B. G. T. एवमेवास्मिन्रक्षणीयेऽवलंबितेन &c. ( ८ ) P. एदं वि. (९) P. A. add णं ( ननु ). ( १० ) B. G. T. णिद्दिसीअदि. ( ११ ) N. add परिक्रम्य; ( १२ ) दुवाररक्खी.

( निष्क्रान्ता बकुलावलिका । )

**विदू०**—इमं दाव फलिहत्थलं[1] अस्सिदो[2] होमि । ( इति तथा कृत्वा । ) अहो सुहप्फारिसदा सिलाविसेसस्स । ( इति निद्रायते । ) ( क )

( मालविका ससाध्वसं[3] तिष्ठति । )

**राजा**—

**विसृज सुन्दरि संगमसाध्वसं**
**तव[4] चिरात्प्रभृति प्रणयोन्मुखे ।**
**परिगृहाण गते सहकारतां**
**त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥**

**माल०**—देवीए[5] भएण अत्तणो वि[6] पिअं कादुं ण पारेमि । ( ख )

**राजा**—अयि[7] न भेतव्यम्[8] ।

**माल०**—( सोपालम्भम्[9] । ) जो ण भाएदि सो मए भट्टिणीदंसणे दिट्ठसमवत्थो[10] भट्टा । ( ग )

( क ) इमं तावत्स्फटिकस्थलमाश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य ।

( ख ) देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।

( ग ) यो न बिभेति स मया भट्टिनीदर्शने दृष्टसमवस्थो भर्ता ।

आत्मा तव सख्यै दत्तः । रहसि निर्जनेऽस्याः सेविता सेवक एव भविष्यामि न तु सेव्य इत्यर्थः । ] **विसृजेत्यादि ।** [ चिरात्प्रभृति बहुकालावधि तव प्रणयोन्मुखे प्रणयसमुत्सुके सहकारितां सहचारितामाम्रवृक्षत्वञ्च गते मयि त्वमतिमुक्तलताचरितं माधवीलतासादृश्यं बन्धनाश्लेषेणेति शेषः परिगृ-

(१) B. G. T. °त्थम्भं. N क्खम्भम् (२) B. G. T. संसिदो. (३) N. ससाध्वसा; A. साध्वसं. (४) P. A. ननु. (५) B. G. T. देवी भआदो. (६) Pn om. अवि. (७) B. G. T. om. (८) A. P. repeat. (९) P. A. om. (१०) N. T. °समत्थो ( °सामर्थ्यो ), B. G. °समावत्थो; A. दिट्ठो समवत्थो.

**राजा—**

**दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम् ।**

**तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥**

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । ( इति संश्लेषमुपनयति । )

( मालविका नाट्येन परिहरति । )

**राजा**—( आत्मगतम् । ) रमणीयः खलु नवाङ्गनानां मदनविषयव्यापारः । तथा हि ।

**हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलिं**

**स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।**

**पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं**

**व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥**

( ततः प्रविशतीरावती निपुणिका च । )

**इरा०**—हञ्जे णिउणिए सच्चं तुमं परिगदत्था चन्दिआए । समुद्दघरअलिन्दए सइदो एआई अज्जगोदमो दिट्ठो त्ति । ( क )

---

( क ) हञ्जे निपुणिके सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दे शयित एकाक्यार्यगौतमो दृष्ट इति ।

---

ह्राण । **दाक्षिण्यमित्यादि** । [ हे बिंबोष्ठि । नाम संभावनायां प्रकाश्ये वा । दाक्षिण्यं सर्वदयितास्वानुकूल्यं नायकानां कुलव्रतमवश्यपालनीयो नियमः । यद्यपीति शेषः तत् तथापि ये मे प्राणास्ते त्वदाशानिबन्धनास्तवाकांक्षा परवशा इत्यर्थः । ] बैंबिकास्तद्वंश्या राजानः ॥ **हस्तमित्यादि** ।

---

( १ ) B. G. T. नायकानाम्. (२) °अनुरक्तहृदयो &c. ( ३ ) P. A. अभिनयति; (उपनयति); (४) N. om. ( ५ ) B. G. N. T. A. °अवतारः ( ६ ) B. G. N. T. कम्पयते. ( ७ ) B. G. T. °अंगुलीः, N. अंगुलीं. ( ८ ) P. Interchange. ( ९ ) P. A. °चक्षुः. ( १० ) P. A. तुह चंदिआए संदिट्ठं समुद्द &c. ( ११ ) N. अलिंदसइदो, B. G. T. कालिंद सइदो. (१२) B. G. T. om. एआइ.

निपु०—अण्णहा कहं भट्टिणीए विण्णावेमि[1] । ( क )

इरा०—तेण हि तहिं एव्व गच्छामो । संसआदो मुत्तं[3] अज्जउत्तस्स[4] पिअवअस्सं पुच्छिदुं अ । ( ख )

निपु०—सावसेसं विअ भट्टिणीए वअणं । ( ग )

इरा०—अण्णं अ[5] चित्तगदं अज्जउत्तं[6] पसादेदुं । ( घ )

निपु०—अह कहं दाणिं भट्टा[7] एव्व ण प्पसादीअदि । ( च )

इरा०—मुद्धे जारिसो चित्तगदो णं तारिसो एव्व अण्णसंकन्तहिअओ अज्जउत्तो । केवलं उअआरादिक्कमं पमज्जिदुं अअं आरम्भो । ( छ )

---

( क ) अन्यथा कथं भट्टिन्यै विज्ञापयामि ।

( ख ) तेन हि तत्रैव गच्छामः । संशयान्मुक्तं आर्यपुत्रस्य प्रियवयस्यं प्रष्टुं च ।

( ग ) सावशेषमिव भट्टिन्या वचनम् ।

( घ ) अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् ।

( च ) अथ कथमिदानीं भर्तैव न प्रसाद्यते ।

( छ ) मुग्धे यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः ।

---

[ रशनाव्यापारलोलांगुलिं रशनायां व्यापारे तद्ग्रन्थिमोचनरूपचेष्टायां

---

( १ ) Po किं अण्णहा; A. किं अलीअं, ( २ ) P. B. G. T. विण्णावीअदि, A. विण्णविदं. ( ३ ) Po A. णिमुत्तं. ( ४ ) B. G. N. T. om. ( ५ ) P. A. take अ last. ( ६ ) Pn भट्टार. ( ७ ) N. om. भट्टा; B. G. T. णु भट्टा एव्व अणु° &c. ( ८ ) B. G. T. अणुणीअदि; P. A. किं ण ( A. om ण ) पच्चणुणीअदि. ( ९ ) B. G. T. A. P. om. ( १० ) P. A. अहाणं.

**निपु०**—इदो इदो[1] भट्टिणी । ( क )

( उभे परिक्रामतः । )

( प्रविश्य )

**चेटी**—जेदु भट्टिणी । देवी भणादि । ण[2] मे एसो मच्छरस्स कालो । तुह क्खु बहुमाणं वड्ढेदुं वअस्सिआए सह णिअलबन्धणे किदा मालविआ । जइ अणुमण्णेसि अज्जउत्तं वि तुहकिदे विण्णावइस्सं । जं[3] तुह इच्छिदं तं मे[4] भणाहि त्ति । ( ख )

**इरा०**—णाअरिए विण्णवेहि देविं[5] । का वअं भट्टिणिं णिओजेदुं । परिअणणिअलणेण दंसिदो मइ अणुग्गहो । कस्स वा अण्णस्स पसादेण अअं जणो वड्ढदि त्ति[6] । ( ग )

**चेटि**—तह । ( इति निष्क्रान्ता । ) ( घ )

---

( क ) इत इतो भट्टिनी ।

( ख ) जयतु भट्टिनी । देवी भणति । न म एषः मत्सरस्य कालः । तव खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका । यद्यनुमन्यस आर्यपुत्रमपि तव कृते विज्ञापयिष्यामि । यत्तवेष्टं तन्मे भणेति ।

( ग ) नागरिके विज्ञापय देवीम् । का वयं भट्टिनीं नियोजयितुम् । परिजननिगडनेन दर्शितो मय्यनुग्रहः । कस्य वान्यस्य प्रसादेनायं जनो वर्धेत इति ।

( घ ) तथा ।

---

समुत्सुकत्वेन व्यग्रांगुलिर्यस्य तं हस्तं रुणद्धि रोद्धुं गृह्णाति । बलाद्धठेनालि-

---

( १ ) P. A. om. one इदो. ( २ ) P. A. इति. ( ३ ) B. G. T. ण मे एसो मस्सरस्स कालो तव बहुमाणं वड्ढेदु &c; N. मस्सरस्स एसो &c. (४) N. तेण. ( ५ ) B. G. T. A. Po. om. ( ६ ) N. Po अज्जउत्तस्स पिअं कादुं तह करेमि. ( ७ ) B. G. T. omit the sentence. (८) P. om. मे. ( ९ ) Po. A. भट्टिणिं. (१०) P. A. णिग्गहेण. (११) B. G. N. T. om. ( १२ ) Po. A. add भणाहि.

**निपु०**—( परिक्रम्यावलोक्य च । ) भट्टिणि एसो दुवारदेसे[1] समुद्दघरअस्स विपणिगदो विअ बलीवद्दो[2] अज्जगोदमो आसीणो एव्व णिद्दाअदि. ( क )

**इरा०**—अच्चाहिदं[3] । ण क्खु सावसेसेविसविआरो[4] भवे[5] । ( ख )

**निपु०**—पसण्णमुहवण्णो[6] दीसइ । अवि अ धुवसिद्धिणा चिइच्छिदो । ता से असङ्कणिज्जं पावं ( ग )

**विदू०**—( उत्स्वप्नायते ) भोदि मालविए । ( घ )

**निपु०**—सुदं भट्टिणीए । कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो । सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छिं पूरिअ संपदं मालविअं सिविणावेदि । ( च )

---

( क ) भट्टिनि एष द्वारदेशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते ।

( ख ) अत्याहितम् । न खलु सावशेषविषविकारो भवेत् ।

( ग ) प्रसन्नमुखवर्णो दृश्यते । अपिच ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् ।

( घ ) भवति मालविके ।

( च ) श्रुतं भट्टिन्या । कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते ।

---

ग्यमाना स्वौ हस्तौ स्तनावरणतां स्तनावरकत्वं नयति । पक्ष्मलनेत्रमाननं

---

( १ ) B. G. T. दुवारे, A. P. दुवारोच्छङ्गे, N. दुवारुद्देसे. ( २ ) B. G. T. A. वुसहो, and A. P. add विस्सद्धो. ( ३ ) B. G. T. किं णु खु अच्चाहिदं । सावसेसो विअ विस° &c. (४) N. सावसेसो &c. ( ५ ) A. विसो & Po विसवेओ. ( ६ ) A. P. पसण्णमुहो. ( ७ ) Pn अत्तणीणो हदासो । सव्वकालं &c. Po A. अत्तणीणो अब्भवहारसंवादावेक्खी. ( A adds कितवो ) इदासो ओदरिओ इदो. ( Po ससक्कारं ) ( for सव्वकालं ) &c. T. B. G. अत्तणीणो. ( T. add एस कितवो ) अब्भवहारि अ ( B. G. add सदावे अ ) किदग्घो ( B. G. add सक्कामो ) इदो &c.

**विदू०**—इरावदिं अदिक्कमन्दी होहि। ( क )

**निपु०**—सुदं[1] अच्चाहिदं। इमं[2] भुअङ्गभीरुअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण[3] दण्डकट्ठेण तम्भन्दरिदा भाअइस्सं। ( ख )

**इरा०**—अरुहदि एव्वं[4] किदग्घो[5] उवद्दवस्स। ( ग )

( निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति। )

**विदू०**—( सहसा प्रबुद्धय। ) अविहा अविहा। भो[6] दव्वीकरो[7] मे उवरि पडिदो। ( घ )

**राजा**—( सहसोपसृत्य। ) सखें न भेतव्यं न भेतव्यम्।

---

( क ) इरावतीमतिक्रामन्ती भव।

( ख ) श्रुतमत्याहितम्। इमं भुजंगभीरुकं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि।

( ग ) अर्हत्येव कृतघ्न उपद्रवस्य।

( घ ) अविधा अविधा। भो दर्वीकरो म उपरि पतितः।

---

पातुं चुंबयितुमुन्नमयत उत्तोलयतो साचीकरोति वक्रं स्थापयति। अतो व्याजेन छलेन ममाभिलाषपूरणसुखं अभिलाषस्य पूरणेन यत्सुखं तन्निर्वर्तयति निष्पादयत्येव॥ ) हञ्जे निपुणिके सत्यं त्वं परिगतार्था चंद्रिकायाम्। अत्याहितं नाम जीवानपेक्षि कर्म। ' अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ' इत्यमरसिंहः। अत्र दोषोद्घाटनादपवादो नाम संध्यङ्गमुक्तं भवति। अत्रैव रोषभाषणात्संफेटोनाम संध्यङ्गमुक्तं भवति। दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि। ' उवद्दवस्स ' इत्यत्र क्वचित् असादेः इति प्राकृते कर्मणि षष्ठी। अवत अवत। अत्रोद्वेजनाद्युक्तिर्नाम संध्यङ्गमुक्तं भ-

---

( १ ) B. G. N. T. P. एदं. ( २ ) B. G. T. P. A. om. ( ३ ) B. G. T. add अत्तणो. ( ४ ) B. G. T. om. A. किल. ( ५ ) Po A. किदग्घो. ( ६ ) B. G. T. om. and N. add वअस्स. ( ७ ) N. सप्पो. ( ८ ) B. G. T. om.

**माल०**—( अनुसृत्य । ) भट्टा मा दाव सहसा णिक्कमे[1] । सप्पो त्ति भणीअदि[2] । ( क )

**इरा०**—हद्धि हद्धि । भट्टा इदो एव्व धावदि । ( ख )

**विदू०**—( सप्रहासम् । ) कहं दण्डकट्ठं एदं । अहं उण जाणे जं मए केदईकण्टएहिं दंसं करिअ[3] सप्पस्स[4] विअ दंसो किदो तं मे फलिदं त्ति[5] । ( ग )

( प्रविश्य पटाक्षेपेण । )

**बकुला०**[6]—मा दाव[7] भट्टा पविसदु[8] । इह कुडिलगई सप्पो विअ दीसदी । ( घ )

**इरा०**—( राजानमुपसृत्य[9][10] । ) अवि[11] णिविग्घमणोरहो दिवासंकेदो मिहुणस्स । ( च )

---

( क ) भर्तः मा तावत्सहसा निष्काम । सर्प इति भण्यते ।

( ख ) हा धिक् हा धिक् । भर्ता इत एव धावति ।

( ग ) कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्येव दंशः कृतस्तन्मे फलितमिति ।

( घ ) मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ।

( च ) अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ।

---

वति । भर्तः मा तावत्सहसोपसर्प । प्रसीदतु भट्टिनी । किं नु खलु दर्दुर

---

( १ ) B. G. T. णिक्कमिस्ससि ( T. as an alternative णिक्कमदु भट्टा ). ( २ ) B. G. T. A. P. भणादि. (३) Po A. om. दंसं करिअ; N. सप्पस्स उवरि अअसो किदं, B. G. T. सप्पस्स ( T. alternative सप्पदंसो ) अअसो किदं. ( ४ ) N. om. ( ५ ) P. A. add ससंभ्रमम्. ( ६ ) B. G. T. क्खु. ( ७ ) B. A. कहिं सप्पो । मा क्खु पविस; ( मा क्खु मा क्खु भट्टा विससि अ. ( ८ ) N. om. ( ९ ) N. स्तंभांतरिता राजानमुपेत्य; ( १० ) B. G. T. add सहसा after राजानम्. ( ११ ) Po A. अवि सिण्ढा मणोरहा दिवा संकेदमिहुणस्स.

( सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः । )

**राजा**—प्रिये अपूर्वोऽयमुपचारः ।

**इरा०**—बउलावलिए दिट्ठिआ दुत्ताहिआरविसआ संपुण्णा दे· पइण्णा । ( क )

**बकु०**—पसीददु भट्टिणी । किं मए किदं त्ति देवो पुच्छिदव्वो[1] । दद्दुरा वाहरन्ति त्ति किं देव्वो पुढविं वरिसिदुं सुमरेदि । ( ख )

**विदू०**—मा दाव । होदीए[4] दंसणमेत्तेण अत्तभवं पणिपादलङ्घणं विसुमरिदो । होदी[5] उण अज्ज वि पसादं ण गेह्णदि । ( ग )

**इरा०**—कुविदा वि[6] दाणिं[7] किं करिस्सं । ( घ )

**राजा**—अस्थाने कोप इत्यनुपपन्नं त्वयि । तथा हि ।

---

( क ) बकुलावलिके दिष्ट्या दूत्याधिकारविषया संपूर्णा ते प्रतिज्ञा ।

( ख ) प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवो पृथिवीं वर्षितुं स्मरति ।

( ग ) मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं वि-स्मृतः । भवती पुनरद्यापि प्रसादं न गृण्हाति ।

( घ ) कुपितापीदानीं किं करिष्यामि ।

---

व्याहरन्त्याक्रोशन्तीति पृथिव्यां देवो वर्षितुं विरमति ( दुर्दरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति । भेकशब्दश्रवणेनैव किमिन्द्रो वर्षणाय प्रवर्तते अपि तु नैव । यदा तस्येच्छा तदैव वर्षति । अतः देवेच्छैवात्रकार·

---

( १ ) Po. A. om. ( २ ) P. N. om. the sentence. ( ३ ) किं णु खु दद्दुरा वाहरन्ति त्ति देवीए पुढवीए वरिसिदुं विरमादि, P. कि दद्दुरा वाहरन्तित्ति देवो पुढविं विसुमरेदि; A. om. the sentence. ( ४ ) Po. A. अत्तहो-दीए. ( ५ ) B. G. N. T. Po. A. तुमं...गेण्हेदि. ( ६ ) N. om. ( ७ ) Po A. add अहं.

**कदा मुखं वरतनु कारणादृते**

**तवागतं क्षणमपि कोपपात्रताम् ।**

**अपर्वणि ग्रहकलुषेन्दु मण्डला**

**विभावरी कथय कथं भविष्यति ॥ १६ ॥**

**इरा०**—अट्ठाणे त्ति सुट्ठु वाहरिदं[1] अज्जउत्तेण । अण्णसंकन्तेसु अह्माणं भाअहेएसु जदि उण कुप्पेअं[2] तदो हस्सा भवेअं[3] । ( क )

**राजा**-- त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः[4] ।

**नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धम्[5] ।**

**इति मोचिते मयैते प्रणिपतितुं[6] मामुपगते च ॥ १७ ॥[7]**

( क ) अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयं ततो हास्या भवेयम् ।

णं किं मम प्रतिज्ञयेतिभावः ) । **कदेति ।** ( हे वरतनु तव मुखं कारणादृते अपराधादिरूपं हेतुं विना कोपपात्रतां कोपभागितां क्षणमपि कदागतं । अपि तु अपराधं दृष्ट्वैव कुप्यसि नान्यथा कदापीत्यर्थः । कारणाभावे कोपस्यानुचितत्वं दृष्टान्तेन दृढयति । अपर्वणि पूर्णिमाप्रतिपत्संधिकालभिन्ने विभावरी रात्रिर्ग्रहकलुषेन्दुमंडला कदा भवति । अपि तु नैव । तथा च कोपकारणं विना इदं कथं भवति तत्कथयेत्यर्थः) । **नार्हतीत्यादि ।** ( कृतापराधोऽपि परिजन उत्सवदिवसेषु बन्धनं नार्हति संयंतुं योग्यो न भवति इति हेतोर्मया मालविकाबकुलावलिके बन्धनान्मोचिते । ते च प्रणिपतितुं नमस्कर्तुं मामुपगते नान्यकारणादिति वाक्यशेषः।) भो अनर्थः संपतितः ।

( १ ) P. A. भणिदं, B. G. T. अवधारिदं. ( २ ) B. G. T. णं अहं. ( ३ ) कुप्पिस्सं and भविस्सं. ( ४ ) N. om. ( ५ ) A. N. दण्डम T. बन्धुम्. ( ६ ) सभाजयितुं. ( ७ ) add विदूषकः–दयालु खु एसो भीरुओ अ.

**इरा०**—णिउणिए गच्छ[1] । देविं विण्णवेहि । दिट्ठो[2] भवदीए पक्खवादो णं अज्ज त्ति । ( क )

**निपु०**—तह । ( इति निष्क्रान्ता । ) ( ख )

**विदू०**—( आत्मगतम् ।[3] ) अहो[4] अणत्थो संपडिदो । बन्धणब्भट्ठो[5] गिहकवोदो[6] चिल्लाए[7] मुहे पडिदो[8] । ( ग )

( प्रविश्य )

**निपु०**—( अपवार्य । ) भट्टिणि जदिच्छादिट्ठाए माहविआए आचक्खिदं । एव्वं खु एदं णिव्वुत्तं त्ति[9] । ( इति कर्णे कथयति । ) ( घ )

**इरा०**—( आत्मगतम् । ) उववण्णं एव्वं[10] । बंह्मबन्धुणा[11] किदो अअं[12] पओओ । ( विदूषकं विलोक्य प्रकाशम्[13] । ) इअं इमस्स काम-

---

( क ) निपुणिके गच्छ । देवीं विज्ञापय । दृष्टो भवत्याः पक्षपातो नन्वद्येति ।

( ख ) तथा ।

( ग ) अहो अनर्थः संपतितः । बन्धभ्रष्टो गृहकपोतो चिल्लाया मुखे पतितः ।

( घ ) भट्टिनि यदृच्छादृष्टया माधविकयाख्यातम् । एवं खल्वेतन्निर्वृत्तमिति ।

---

बन्धभ्रष्टो गृहकपोतः पारावतो बिडालिकाया आलोके पतितः ( बिडालिक-

---

(१) B. G. T. गच्छिअ; Po. A. om. (२) P. A. दिट्ठं भवदीए पक्खवादित्तणं अज्ज त्ति; B. G. T. एक before पक्खवादो and अवहिदं ( अवधृतं ) मे हिअअ before अज्जत्ति; दिढपक्खपादं अवगदं दे हिअअं त्ति. ( ३ ) स्वगतम. ( ४ ) N. मोः. ( ५ ) B. G. N. T. Po बन्धणब्भट्ठो. ( ६ ) B. G. T. गेहकवोदओ. ( ७ ) B. G. N. T. बिडालिआए. ( ८ ) A. मंदारलतालभो विअ कवोदो चिल्लाए मुहे पडिदो. ( ९ ) P. om त्ति, B. G. T. णिमित्तम्. ( १० ) B. G. T. सव्वं जेव्व; and A. N. om. ( ११ ) N. add सव्वं अअं एत्थ and om. अअं after किदो. ( १२ ) उद्भिमण्णी. ( १३ ) N. om.

तन्तसाचिवस्स णीदी । ( क )

**विदू०**—होदि जदि णीदिएँ एक्कं वि अक्खरं पढेअं तदो गेआँत्ति वि विसुँमेरेअं । ( ख )

**राजा**—( आत्मगतम्ँ । ) कथं नु खल्वेस्मात्संकटादात्मानं मोक्ष्ँयामि ।

( प्रविश्यँ )

**जय०**—( सावेगम् ) देव कुमारी वसुलच्छी कन्दुअं अणुधावन्दी पिङ्गलवाणरेण बलिअं तासिदो अङ्कणिसण्णाँ देवीए पवादेँकिसलअं विअ वेवमाणा णँ किं वि पकिदिं पडिवज्जइ । ( ग )

---

( क ) उपपन्नमेव । ब्रह्मबन्धुना कृतोऽयं प्रयोगः । इयमस्य कामतन्त्रसचिवस्य नीतिः ।

( ख ) भवति यदि नीतेरेकमप्यक्षरं पठेयम् तदा गायत्रीमपि विस्मरयेम् ।

( ग ) देव कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते ।

---

या आलोकितः ) । भवति यदि नीतिगतमेकमप्यक्षरं पठेयम् ( भवति यदि नीतौ एकमपि अक्षरं पठितं ) तदात्मानं गोहत्या प्रापितोभवेयम् । परित्रातस्त्वया स्वपक्षः अहमिति शेषः । अत्र देव्यनुग्रहरूपकार्यसंग्रहणादादानं नाम संध्यङ्गमुक्तं भवति । इदं मालविकाकृतमुद्यानपालिकानुसरणमुत्तराङ्को

---

( १ ) N. णीदिगदं. ( २ ) N. णं मए अत्तभवं पेसिदो हुवे । T. ण मए अत्तभवं संसिदो भवे ( न मया..संश्रितो &c. ). ( ३ ) B. G. संसिदो ( संशितः ) ( ४ ) T. अपवार्य; स्वगतम्. ( ५ ) P. A. om. ( ६ ) N. मोचयिष्यामि; B. G. T. om. आत्मानं and read मोच्यावहे; मोचयामहे. ( ७ ) T. P. add सावेगं जयसेना and omit सावेगं below; B. G. सावेगा. ( ८ ) अणुहोन्ती. ( ९ ) P. A. उत्तासिदा; B. G. T. वित्तासिदा. ( १० ) अंके &c. ( ११ ) Pn. पवादक्क°. ( १२ ) Po A. दाणि वि for णकिंपि.

**राजा**—कष्टम् । कातरो बालभावः ।

**इरा०**—( सावेगम् । ) तुवरदु अज्जउत्तो णं समास्सासइदुं । मा से संतासजणिदो विआरो वड्ढदु । ( क )

**राजा**—अयमेनां संज्ञापयामि । ( इति सत्वरं परिक्रामति । )

**विदू०**—साहु रे पिङ्गलवाणर साहु । परित्तादो तुए सपक्खो। (ख)

( निष्क्रान्तौ राजा विदूषकश्च । इरावती निपुणिका प्रतीहारी च । )

**माल०**—हला देविं चिन्तिअ वेवदि मे हिअअं । ण जाणे अदो-वरं किं वा अणुहविदव्वं हुविस्सदि त्ति । ( ग )

( नेपथ्ये )

अच्चरिअं अच्चरिअं । अपुण्णे एव्व पञ्चरत्ते दोहलस्स मउलेहिं संणद्धो तवणीआसोओ । जाव देवीए णिवेदेमि । ( घ )

---

( क ) त्वरतामार्यपुत्र एनां समाश्वासयितुम् । मास्याः संत्रासजनितो विकारो वर्धताम् ।

( ख ) साधु रे पिङ्गलवानर साधु । परित्रातस्त्वया स्वपक्षः ।

( ग ) सखि देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वानुभवितव्यं भविष्यतीति ।

( घ ) आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ।

---

पयुक्तत्वाद्विन्दुरित्यनुसंधेयम् ।। इति श्रीकाटयवेमभूपविरचिते कुमारगिरिरा-

---

( १ ) B. G. repeat. (२) B. G. T. A. Po संदाव°. (३) P. A. अहं. ( ४ ) Po A. निष्कान्तो वयस्येन राजा &c; Pn निकान्तः सवयस्यो राजा &c. (५) B. G. T. om.. (६) A. चिंतअंदीए. (७) B. G. T. किं अदो &c. and om. परं वा; P. A. om. वा. ( ८ ) B. G. T. om.

( उभे श्रुत्वा प्रहृष्टे[1] । )

**बकुला०**—अस्ससदु सही[2] । सच्चप्पइण्णा देवी । ( क )

**माल०**—तेण हिं[3] पमदवणपालिआए पिट्ठदो होमं[4] । ( ख )

**बकुला०**—तह । ( ग )

( इति निष्क्रान्ते । )[5]

इति चतुर्थोऽङ्कः ।

---

( क ) आश्वसितु सखी । सत्यप्रतिज्ञा देवी ।

( ख ) तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः ।

( ग ) तथा ।

---

नीये मालविकाग्निमित्रव्याख्याने चतुर्थोऽङ्कः ।

---

( १ ) Pn. add. सभयः (२) P. पिअसही. (३) Pn. om. B. G. T. अहं. ( ४ ) B. G. N. T. होमि. ( ५ ) P. G. T. ( इति निष्क्रान्ताः सर्वे ); A. इति निष्क्रान्ताः.

## पञ्चमोऽङ्कः ।

( ततः प्रविशत्युद्यानपालिका । )

**उद्यान०**—उवक्खित्तो मए किदसक्कारविहिणो[1] तवणीअ[2]सोअस्स वेदिआबन्धो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । ( परिक्रम्य । ) अहो देव्वस्स अणुकम्पणीआ मालविआ । तस्सिं तह चण्डिआ देवी इमिणा असोअकुसुमवुत्तन्तेण[3] पसादसुमुही[4] भविस्सदि । कहिं णु खु हुवे[5] देवी[5] । ( विलोक्य । ) अह्मो एसो देवीए[6] परिअणब्भन्तरो किंवि जदुमुद्दालञ्छिदं चीरमञ्जूसं करे[8] गेह्णिअ चउस्सालादो कुज्जो सारसओ णिक्कमदि[9] । पुच्छिस्सं दाव णं । ( क )

( ततः प्रविशति यथानिर्दिष्टः कुब्जः । )[10]

**उद्यान०**—( उपसृत्य । ) सारसअ कहिं पत्थिदोसि । ( ख )

---

( क ) उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डिका देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु भवेद्देवी । अहो एष देव्याः परिजनाभ्यन्तरः कामपि जतुमुद्रालाञ्छितां चीरमञ्जूषां करे• गृहीत्वा चतुःशालातः कुब्जः सारसको निष्क्रामति । प्रक्ष्यामि तावदेनम् ।

( ख ) सारसक कुत्र प्रस्थितोऽसि ।

---

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादि** । उपक्षिप्तो मया कृतस-

---

( १ ) B. G. T °सक्कारविहिणा ( २ ) A. Po. भित्ति°, B. G. T. भित्तिवेदिआ°. (३) B. G. T. हरिसदोहलवुत्तणेण; A. कुसुमत्थवण्ण ( ४ ) B. G. T. om. मु, A. Po. पसादाहिमुही. ( ५ ) N. Interchange. ( ६ ) A. Po. om. ( ७ ) देवीपरिअण° &c. ( ८ ) B. G. N. T. om. ( ९ ) B. G. N. T. चतुस्सालादो कुज्जो ( N. सारसको ) णिक्कमदि. ( १० ) N. om. the bracket and read the following speech along with the above.

**सारसकः**—महुआरिए विज्जापारअणं अणुचिठ्ठन्ताणं बह्मणाणं इयं णिच्चदक्खिणा मासिआ दादव्वा। तां अज्ज पुरोहिदस्य हत्थं पाविदुं । (ग)

**उद्यान॰**—[2]किं णिमित्तं ( क )

**सार॰**—जदप्पहुदि सुदं[3] सेणावइणा[4] जण्णतुरगरक्खणे णिउत्तो भट्टिदारओ वसुमित्तो त्ति तदप्पहुदि तस्स आउसो[5] णिमित्तं अठ्ठादसमुव-ण्णपरिमाणं दक्खिणं देवी दक्खिणीएहिं पडिग्गाहेदि ।[7] ( ख )

**उद्यान॰**—अह कहिं देवी । किं वा अणुचिठ्ठदि । ( ग )

**सार॰**—मङ्गलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लिविअरेहिं[9] वाचीअमाणं लेहं[10] सुणादि । ( घ )

---

( ग ) मधुकरिके विद्यापारायणमनुतिष्ठतां ब्राह्मणानामियं नित्यदक्षि-णा मासिका दातव्या । तामार्यपुरोहितस्य हस्तं प्रापयितुम् ।

( क ) किं निमित्तम् ।

( ख ) यदाप्रभृति श्रुतं सेनापतिना यज्ञतुरगरक्षणे नियुक्तो भर्तृदारको वसुमित्र इति तदाप्रभृति तस्यायुषो निमित्तं अष्टादशसुवर्णपरिमाणां दक्षि-णां देवी दक्षिणीयैः परिग्राहयति ।

( ग ) अथ कुत्र देवी । किं वानुतिष्ठति ।

( घ ) मङ्गलगृहे आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लिपिकारैर्वाच्यमानं लेखं शृणोति ।

---

त्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । तस्यां तथा चण्डीकृता देव्य-

---

( १ ) महुअरिए विज्जापारगामीणं बह्मणाणं इमाणि दक्खिणा णिक्काणि । ताइं पुरोहिदस्स हत्थं पाविदुं । Po. महुअरिए विज्जापारआणं...इमा &c. B. G. T. महुअरिए विज्झाचरिआणं इमं..मासि ( B. G. अ ) अज्ज .पावइस्सं.. N. महुअरिए विज्जाभरिआणं बह्मणाणं णिच्चदक्खिणा माडिआ पुरोहिदस्स हत्थं पावइस्सं. ( २ ) B. G. T. add अह. ( ३ ) N. om. सुदं. ( ४ ) N. सेणावदी. B. G. T. om. वसुमित्तो. ( ५ ) N. आउसणिमित्तं; B G. T. आउस-स्यं. ( ६ ) N. णिक्कसदं°; B. G. T. अट्टसद°. ( ७ ) B. G. T. दक्खिणा एहिं पडिणा होदि. for दक्खिणां &c. ( ८ ) P. A. add जुज्जइ, and om. किंवा &c. ( ९ ) Pn. लिविअरीहिं N. लेहकरोहिं and take लेहं before this. ( १० ) लेखपत्तं.

**उद्यान०**—को उण विदब्भराअवुत्तन्तो[१]। (क)

**सार०**—वसीकिदो किल वीरसेणप्पमुहेहिं भट्टिणो विजअदण्डेहिं[२] विदब्भणाहो। मोइदो अ[३] से दाआदो माहवसेणो। दूदो अ तेण महासारा-णि रअणवाहणाणि[४] सिप्पआरिआभूइट्ठं परिअणं अ[५] उवाअणीकरिअ भट्टिणो सआसं पेसिदो सुवो[७] किल भट्टारं देक्खिस्सदि त्ति। (ख)

**उद्यान०**—गच्छ। अणुचिट्ठ अत्तणो णिओअं। अहं वि देविं पे-क्खिस्सं। (ग)

( इति निष्क्रान्तौ। )

**[९]प्रवेशकः**

---

( क ) कः पुनर्विदर्भराजवृत्तान्तः।

( ख ) वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः। मो-चितश्चास्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नवाहनानि शिल्पकारिकाभूयिष्ठं परिजनं चोपायनीकृत्य भर्तुः सकाशं प्रेषितः श्वः किल भर्तारं पश्यतीति।

( ग ) गच्छ। अनुतिष्ठ आत्मानो नियोगम्। अहमपि देवीं प्रेक्षिष्ये।

---

नेनाशोककुसुमवृत्तान्तेन प्रमादसुमुखी भविष्यति। कुत्र खलु देवी भवेत्। अहो एष खलु देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसको निष्क्रामति। मधुकरिके विद्यापारायणमनुतिष्ठतां ब्राह्मणानां नित्यदक्षिणानिष्काणि। आर्यपुरोहित-स्य हस्त एव वितरीतुम्। यदाप्रभृति श्रुतं सेनापतिना यज्ञतुरंगरक्षणे

---

(१) B. G. N. T. add सुणीअदि. (२) B. G. T. चक्केहिं. (३) B. G. T. किल. (४) N. रअणाणि &c. (५) Po A. B. G. T. दारिका. (६) B. G. N. T. om. अ. (७) N. om. the sentence सुवो &c and take last त्ति here; B. G. T. om. last त्ति. (८) N. अहं वि देवीए सआसं गच्छिस्सं। तुमं वि अत्तणो णिओअं अणुचिट्ठ। (९) N. add इति.

( ततः प्रविशति प्रतीहारी । )

**प्रती०**—आणत्तह्मि असोअसक्कारवावुदाएँ देवीए । विण्णवेहि अज्जउत्तं[1] । इच्छेह्मि[2] अज्जउत्तेणसह असोअरुक्खस्स[3] पसूणलच्छि पचक्खीकादुं त्ति । ता जाव धम्मासणगदं देवं पडिवालेमि । ( इति परिक्रामति । ) ( क )

( नेपथ्ये वैतालिकाः )

**प्रथमः**--दिष्ट्या दण्डैरेव रिपुशिरःसु वर्तते देवः ।

> **परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं**
> **नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।**
> **विजयकरिणामालानाङ्कैरुपोढबलस्य ते**
> **वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥**

---

( क ) आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या । विज्ञापयार्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्याव-द्धर्मासनगतं देवं प्रतिपालयामि ।

---

नियुक्तो भर्तृदारको वसुमित्रः इति । तदाप्रभृति तस्यायुर्निमित्तं अष्टशतसु-वर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति । दक्षिणीयो दक्षिणार्हः । ' कडङ्करदक्षिणाच्छः च ' इति छप्रत्ययः । युज्यते । कुत्र देवी । किं वा-नुतिष्ठति । ( अत्र च वृत्तस्य अशोकविकासस्य वर्तिष्यमाणस्य शिल्पिदा-रिकावृत्तांतस्य निदर्शनं ) । **ततः प्रविशतीत्यादि** ॥ आज्ञप्तास्म्यशो-कसत्कारवत्सलया देव्या । विज्ञापय आर्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोक वृक्षस्य कसुमलक्ष्मीं प्रत्यक्षीकर्तुमिति । तस्माद्यावद्धर्मासनस्थितं देवं प्रतिपा-लयामि । **परभृतेत्यादि** । ( आत्तरतिर्गृहीतरतिनामपत्नीको गृहीतसंतोषश्च विदिशातीरोद्यानेषु विदिशाख्यनदीकूलस्थारामेष्वनंग इव काम इव अनं-

---

( १ ) P. A. om.; B. G. T. देवीए असोअ &c. ( २ ) N. om. ( ३ ) N. om. ( ४ ) P. A. रुक्खपसूण°. ( ५ ) P. om. ( ६ ) N. आलानत्वं गतैः प्रबलस्य ते.

द्वितीयः—

विरचितपदं वीरप्रीत्या सुरोपम सूरिभि-

श्चरितमुभयोर्मध्ये कृत्य स्थितं क्रथकैशिकान् ।

तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं

परिघगुरुभिर्दोर्भिः शौरेः[1] प्रसह्य च रुक्मिणीम् ॥ २ ॥

प्रती०—एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि[2] । अहं वि दाव इमस्स पमुहादो[3] किंवि[4] ओसरिअ[5] एदं मुहालिन्दतोरणं समस्सिदा होमि । ( इत्येकान्ते स्थिता । )[6] ( क )

( ततः प्रविशति सवयस्यो राजा )[7][8]

---

( क ) एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखात्किंचिदपसृत्य एतन्मुखालिन्दतोरणं समाश्रिता भवामि ।

---

गवान् प्रशस्तांगवान् परभृतकलव्याहारेषु परभृतानां कोकिलानां बंदिनां च कलव्याहारेषु कलोक्तिषु मधुं वसंतं माधुर्यं च नयसि । हे वरद अभीष्टद उपोढबलस्य समर्थसैन्यस्य उर्जितसामर्थ्यस्य च ते तव रिपुः शत्रुः विजयकरिणां विजयहस्तिनां आलानांकैः बंधनसाधनैः वैरदारोधवृक्षैः वरदाख्यनदीतीरस्थवृक्षैः सह अवनतः नम्रतामनुकूलतां च गतः) । विरचितेति । क्रथकैशिकान्विदर्भान्मध्येकृत्य आक्रम्येत्यर्थः । 'मध्ये पदे निवचने च' इति गतिसंज्ञायाम् 'कुगतिप्रादयः' इति समासः । समासानन्तरं क्त्वोल्यबितिल्यबादेशः । ( सुरोपम देवतुल्य परिघगुरुभिः परिघास्त्रवद्दृढैः दोर्भिर्बाहुभिः चतुर्भिरित्यर्थात् रुक्मिणीं हृतवतः शौरेः कृष्णस्य विदर्भपतेः श्रियं दण्डप्रधानसैन्यैः हृतवतः तव च एतयोरुभयोश्चरितं सूरिभिः पण्डितैः वीरप्रीत्या शूरभक्त्या च विरचितपदं कीर्तितमाहात्म्यं क्रथकैशि-

---

( १ ) B. G. N. T. विष्णोः ( २ ) देत्रो last for भट्टा. ( ३ ) B. G. T. मुहादो. ( ४ ) N लोआदो for किं वि and B. G. T. om it. ( ५ ) B. G. समोसरिअ. ( ६ ) N. खम्बंतरिदा for एदं..स्सिदा. ( ७ ) P. A. om. इति ( ८ ) B. G. N. T. प्रविश्य सवयस्यः.

**राजा**—

**कान्तां विचिन्त्य सुलभेतरसंप्रयोगां**

**श्रुत्वा विदर्भपतिमानमितं बलैश्च।**

**धाराभिरातप इवाभिहतं सरोजं**

**दुःखायते च[1] हृदयं[2] सुखमश्नुते च ॥ ३ ॥**

**विदू०**—जह अहं[3] पेक्खामि तह[4] एक्कन्तसुहिदो भवं भविस्सदि ।(क)

**राजा**—कथमिव।

**विदू०**—अज्ज किल देवीए[5] पण्डिदकोसिई भणिदा । भअवदि जइ तुमं[6] पसाहणगव्वं[7] वहसि तं[8] दंसेहि मालविआए सरीरे विवाहणेवत्थं त्ति । ताए अ[10] सविसेसालंकिदा मालविआ । तत्तहोदी[11] कदावि पूरए भवदो[12] मणोरहं[13]। ( ख )

( क ) यथाहं पश्यामि तथा एकान्तसुखितो भवान्भविष्यति।

( ख ) अद्य किल देव्या पण्डितकौशिकी भणिता। भगवति यदि त्वं प्रसाधनगर्वं वहसि तद्दर्शय मालविकायाः शरीरे विवाहनैपथ्यमिति । तया च सविशेषालंकृता मालविका। तत्रभवती कदाचित्पूरयेद्भवतो मनोरथम् ।

कांस्तदाख्यविषयं मध्ये कृत्य अधिष्ठाय स्थितं अनेन तव विदर्भश्रीहरणं कृष्णस्य रुक्मिणीहरणमिव तवातीवयशस्करमिति भावः ) । अहमपि तावदस्य प्रमुखादपसृत्य एतदलिन्दतोरणं समाश्रिता भवामि । **कान्तां विचिन्त्येत्यादि** । सुलभेतरसंप्रयोगामसुलभ (दुर्लभ) समागमाम् ।

( १ ) N. मम मनः ( २ ) B, G. ( T. as an alternative ) इह पेक्खामि. ( ३ ) P. A. om. अहं and read देक्खामि. ( ४ ) N. om. तह & A. सव्वहा for it. ( ५ ) Po. A. B. G. T. धारिणीए and N. add एव्वं. ( ६ ) B. G. T. तुमंजदि, T. add सच्चं. ( ७ ) पसाहणणेउणं ( ८ ) B. G. T. om. ( ९ ) P. A. वैदब्भअं. ( १० ) N. om. अ; B. G. T. तदो for ताए अ; and read तत्थभोदीए after मालविआ. ( ११ ) B. G. T. om. ( १२ ) N. add वि. ( १३ ) P. A. take पूरेइ ( Pn. दि for इ. ) here for पूरए.

**राजा**—सखे मदपेक्षानुवृत्त्यौ निवृत्तेर्ष्यायौ धारिण्याः पूर्वचरितैः संभाव्यत ऐतत् ।

**प्रती०**—( उपगम्य । ) जेदु भट्टा । देवी विण्णवेदि । तवणीआसोअस्स कुसुमसोहग्गदंसणेण मह आरम्भो सफलो करीअदु त्ति । (क)

**राजा**—ननु तत्रैव देवी ।

**प्रती०**—अह इं । जहरुहसंमाणसुहिअं अन्तेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेर्ण सह देवं पडिवालेदि । ( ख )

**राजा**—( सहर्षं । विदूषकं विलोक्य । ) जयसेने गच्छाग्रतः ।

**प्रती०**—एदु एदु देवो । ( इति परिक्रामति । ) [९] ( ग )

**विदू०**—( विलोक्य । ) भो वअस्स किंचि[१०] परिवुत्तजोव्वणो विअ वसन्दो पमदवणे लक्खीआदि । ( घ )

---

( क ) जयतु भर्ता । देवी विज्ञापयति । तपनीयाशोकस्य कुसुमसौभाग्यदर्शनेन ममारम्भः सफलः क्रियतामिति ।

( ख ) अथ किम् । यथार्हसंमानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ।

( ग ) एत्वेतु देवः ।

( घ ) भो वयस्य किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।

---

दुःखायते ।'सुखादिभ्यः कर्तृवेदनायाम्' इतिक्यङ् । अत्र मालविकारूपबीजानुसंधानात्संधिर्नाम निर्वहणसंध्यङ्गमुक्तं भवति । कथमिवेति प्रश्ने । अत्र

---

( १ ) N. B. G. मदपेक्षामनुप्राप्य, T. मदपेक्षामनुवृत्य. (२) B. G. N. T. अनया धारिण्या. (३) B. G. N. T. add एव, मदपेक्षानुवृत्याप्यनया संभाव्यमेतत्. (४) B G. T. repeat. (५) Po. A. सोहा; N. सम, B. G. T. कुसुमोग्गमसिरिं अज्जउत्तेणसह पच्चक्खीकादुं इच्छामित्ति. ( ६ ) B. G T. जह तुह सम्माणसुहं. ( ७ ) Po. A. अन्तेउरजणं. ( ८ ) T. [ पण्डिदकोसिकीए ] समं. ( ९ ) P. A. Om. इति परिक्रामति. ( १० ) P किं वि.

**राजा**—यथाह भवान्[१]।

**अग्रे विकीर्णकुरबकफलजालविभुज्यमानसहकारम्[२][३]।**

**परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥**

**विदू०**—( परिक्रम्य । ) भो[४] अअं सो दिण्णणेवत्थो विअ कुसुमत्थबएहिं तवणीआसोओ। ओलोअदु भवं । ( क )

**राजा**—स्थाने खलु प्रसवमन्थरोऽभूद्[५]यमिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य ।

**सर्वाशोकतरूणां[७] प्रथमं सूचितवसन्तविभवानाम् ।**

**निर्वृत्तदोहदेऽस्मिन्संक्रान्तानीव कुसुमानि[८] ॥ ५ ॥**

---

( क ) भो अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । अवलोकयतु भवान् ।

---

कार्यान्वेषणाद्विरोधो नाम संध्यङ्गमुक्तं भवति । तत्रभवती धारिणी कदाचित्पूरयेद्भवतोऽपि मनोरथम् । अत्र कार्योपदर्शनात्पूर्वभाव इति संध्यङ्गमुक्तं भवति । **अग्रे विकीर्णकुरबकेत्यादि** । ( अग्रे पुरतो विकीर्णानां व्याप्तानां कुरबकाणां फलजालकैः फलसमूहै भिद्यमानोऽवलंब्यमानः सहकारो यत्र तादृशमृतोर्वसंतस्य इदं परिणाममुखं परिणतेः परिपाकस्य आरंभात्मकं यौवनं चेतः समुत्सुकयति उत्कंठितं करोति ) । **सर्वाशोकतरूणामित्यादि** । ( प्रथमं सूचितवसंतविभवानां ज्ञापितवसंतसंपत्तीनां सर्वाशोकलतानां मध्ये निर्वृत्तदोहदे निष्पन्नौषधे प्राप्तमालविकापादस्पर्शे इति यावत् अस्मिंस्तपनीयाशोके मुकुलानि सर्वासामित्यनुषंगः संक्रान्तानीव । अन्येषां दोहोदाभावात् सर्वेषां मुकुलानामेकत्र समावेशादिव पुष्पप्राचुर्यमि-

---

( १ ) P. A. यथारत्तं ( Pn. om. रत्तं ) भवानाह. (२) A. विकीर्ण सुखं फलजालनिभज्य°. ( ३ ) N. T. जालकभिद्य°, B. G. जालकहीय°. Po. °भज्य (४)N. अहो. (५) P. अयं before प्रसव and N. before अभूत्, and both complete the sentence after अभूत. ( ६ ) T. ( as an alternative ) पुष्प्यति. (७) B G. T. लतानां. (८)B. G. T. मुकुलानि.

**विदू०**—भो विसद्धो होहि । अह्मेसु संणिहिदेसु[2] वि धारिणी पस्स-परिवट्टिणिं[3] मालविअं अणुमण्णेदि[4] । ( क )

**राजा**—( सहर्षम् । ) सखे पश्य ।

**मामियमभ्युपातिष्ठति देवी विनयादुपस्थिता[5] प्रियया ।**
**विस्मृ[6]तहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥**

( ततः प्रविशति देवी[7] परिव्राजिका मालविका विभवतश्च परिवारः । )

**माल०**—( आत्मगतम् । ) जाणामि णिमित्तं[8] कोदुआलंकारस्स । तह वि बिसिणिपत्तगदं सलिलं विअ वेवदि मे हिअअं[9] । अवि अं[10] दक्खिणेदरं वि मे णअणं बहुसो फुरादि । ( ख )

**विदू०**—भो वअस्स[11] विवाहणेवत्थेण सविसेसं खु सोहदि अत्त[12]होदी मालविआ ( ग )

---

( क ) भो विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।

( ख ) जानामि निमित्तं कौतुकालंकारस्य । तथापि बिसिनीपत्रगतं सलिलमिव वेपते मे हृदयं । अपि च दक्षिणेतरमपि मे नयनं बहुशः स्फुरति ।

( ग ) भो वयस्य विवाहनेपथ्येन सविशेषं खलु शोभतेऽत्रभवती मालविका ।

---

त्याशयः ) । **मामियमिति** । ( विस्मृतहस्तकमलया प्रियया मालविकया

---

( १ ) N. add तह। and B. G. T. for भोः. ( २ ) T. Po. A. उवगदेसु; B. G. तहगदेसु. ( ३ ) B. G. पस्सपरिवट्टिअं. ( ४ ) Po. A. अणुणेदि. (५) B. G. T. अनूत्थिता; N. A. अनुत्थिता. देवी वचनादनुत्थिता. ( ६ ) N. T. विस्तृत. ( ७ ) P. परिव्राजिका देवी &c; B. G. N. T. धारिणी मालविका परिव्राजिका &c. ( ८ ) T. add मह. (९) B. G. N. T. A मे हिअअं before बिसिणि &c. B. G. N. T. विअ सलिलं. (१०) B. G.T. P. A. om. अवि अ. P. also मे; B. G. T. om. वि and add अ after णअणं. ( ११ ) P. A. असंदेहं for वअस्स. ( १२ ) N. om.

**राजा**—पश्याम्येनाम् । यैषा ।

> **अनतिलम्बिदुकूलनिवासिनी**
> **लघुभिराभरणैः प्रतिभाति मे ।**
> **उडुगणैरुदयोन्मुखचान्द्रिका**
> **गतहिमैरिव चैत्रविभावरी ॥ ७ ॥**

**देवी**—( उपेत्य । ) जेदु अज्जउत्तो । ( क )

**विदू॰**—वड्ढदु भोदी । ( ख )

**परिव्रा॰**—विजयतां देवः ।

**राजा**—भगवति अभिवादये ।

**परिव्रा॰**—अभिप्रेतसिद्धिरस्तु ।

**देवी**—( सस्मितम् । ) अज्जउत्त एसो दे अह्मेहिं तरुणीजणसहाअस्स असोओ संकेदघरअं कप्पिदो । ( ग )

**विदू॰**—भो आराहिदो सि । ( घ )

---

( क ) जयत्वार्यपुत्रः ।

( ख ) वर्धतां भवती ।

( ग ) आर्यपुत्र एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः ।

( घ ) भो आराधितोऽसि ।

---

अनूत्थिता अनुगतेति यावत् देवी धारिणी नरेन्द्रलक्ष्म्या नृपश्रिया अनुगता वसुमतीव मामभ्युत्तिष्ठति ) । **अनतिलम्बीत्यादि** ( अनतिलम्बिदुकूलनि-

---

( १ ) P. A. add आभरणालंकृताम. ( २ ) P. om यैषा; B. G. T. om. या. ( ३ ) N. बहुभिः. ( ४ ) मुखकौमुदी. ( ५ ) B. G. N. T. हत. ( ६ ) B. G. T. repeat. ( ७ ) P. A. N. घरओ; B. G. T. गेहको.

**राजा**—( सव्रीडमशोकमभितः परिक्रामन् । )

**नायं देव्या भाजनत्वं न नेयः**
**सत्काराणामीदृशानामशोकः ।**
**यः सावज्ञो माधवश्रीनियोगे**
**पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥**

**विदू०**—भो विसद्धो भविअ तुमं[1] इमं जोव्वणवादिं पेक्ख । (क)

**देवी**—कं । (ख)

**विदू०**—भोदि[2] तवणीआसोअस्स कुसुमसोहम् । (ग)

( सर्वे उपविशन्ति । )

**राजा**—( मालविकां विलोक्य । आत्मगतम् । ) कष्टः[3] खलु संनिधिवियोगः[4] ।

**अहं रथाङ्गनामेव प्रिया सहचरीव मे ।**
**अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥**

---

( क ) भो विस्रब्धो भूत्वा त्वमिमां यौवनवतीं पश्य ।

( ख ) काम् ।

( ग ) भवति तपनीयाशोकस्य कुसुमशोभाम् ।

---

वासिनी परिहितानतिदीर्घवसना )। **नायं देव्या इत्यादि** ।( अयमशोको देव्या ईदृशानां सत्काराणां सम्मानानां भाजनत्वं न नेयः न प्रापणीयः इति न । अपि तु नेय एव । तत्र हेतुत्वेन द्वितीयार्धं । योऽशोको माधवश्रीनियोगे वसंतसंपदो नियोगे सपुष्पत्वभवनरूपे आदेशे सावज्ञः कृतानादरः सन् त्वत्प्रयत्ने तव प्रयासे पुष्पैः विकाशीकरणैः आदरं शंसति सूचयति ) । **अहं रथाङ्ग-**

---

( १ ) P. om. तुमं; A. om. इमं; B. G. T. om. तुमं इमं. ( २ ) B. G. T. P. A. om. भोदि; P. A असोअकुसुमसोह. ( ३ ) P. A. कष्टं. ( ४ ) P. A. add ममाद्य.

( प्रविश्य )[1]

**कञ्चुकी**—जयतु जयतु[2] देवः । अमात्यो[3] विज्ञापयति । तस्मिन्[4] विदर्भ-राजोपायने[5] द्वे शिल्पकारिके[6] मार्गपरिश्रमादलघुशरीरे[7] इति[8] कृत्वा न प्रवेशिते । संप्रति देवोपस्थानयोग्ये[9] । तदाज्ञां देवो दातुमर्हतीति[10] ।

**राजा**—प्रवेशय ते ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य ताभ्यां सह प्रविश्य ।) इत[11] इतो भवत्यौ ।

**प्रथमा**—( जनान्तिकम्[12] । ) हला मदणिए[13] अपुव्वं इमं राअउलं पविसन्तीए पसीदादि मे हिअअं[14] । ( क )

**द्वितीया**—[15]जोसिणीए[16] अत्थि क्खु लोअप्पवादो[17] आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदि त्ति । ( ख )

---

( क ) सखि मदनिके अपूर्वमिमं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् ।

( ख ) ज्योत्स्निके अस्ति खलु लोकप्रवाद आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति ।

---

त्यादि । ( अहंरथाङ्गनामा चक्रवाक इव । मे मम प्रिया मालविका सहचरीव ।

---

( १ ) P. A. ( ततः प्रविशति कंचुकी, A. कांचुकेय: for कंचुकी ). ( २ ) N. विजयतां; T जयति, जयति; A. जयतु. ( ३ ) N. add देव. ( ४ ) N. om. and T. add काले. ( ५ ) P. A. N. °विशयो° ( ६ ) Po. A. and T. ( as an alternative ) दारिके. ( ७ ) P. A. अलसशरीरे. ( ८ ) N. पूर्वे. ( ९ ) N. add संवृत्ते. ( १० ) B. G. T. om. ( ११ ) N. om. ( १२ ) N. om. ( १३ ) P. A. रअणिए. ( १४ ) P. A. अब्भंदरगदो अप्पा, B. G. T. अब्भंदर ( B. G. अब्भं. ) संगदो अप्पा. ( १५ ) P. A. add हञ्जे. ( १६ ) P. A. add महवि एव्वं एव्व; B. G. T. महवि एव्व. ( १७ ) Pn. लोअवादो.

**प्रथमा**—सो[1] सच्चो दाणिं होदु । ( क )

**कञ्चुकी**—एष देव्या सह देवस्तिष्ठति । उपसर्पतां[3] भवत्यौ ।

( उभे उपसर्पतः । )

( मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयतः । )[4]

**उभे**—( प्रणिपत्य । ) जेदु भट्टा । जेदु[5] भट्टिणी । ( ख )

( राजाज्ञया उभे उपविष्टे । )[6]

**राजा**—कस्यां कलायामभिविनीते[7] भवत्यौ ।

**उभे**—भट्टा संगीदे[8] अभिविणीदे[9] ह्म । ( ग )

**राजा**—देवि गृह्यतामनयोरन्यतरा ।

**देवी**—मालविए इदो पेक्ख[10] । कदरा दे संगीदसहआरिणी[11] रुच्चइ । ( घ )

---

( क ) स सत्य इदानीं भवतु ।

( ख ) जयतु भर्ता । जयतु भट्टिनी ।

( ग ) भर्तः संगीतेऽभिविनीते स्वः ।

( घ ) मालविके इतः पश्य । कतरा ते संगीतसहकारिणी रोचते ।

---

चक्रवाक्येव निकटस्थैवेति ध्वनिः । धारिणी नौ अवयोरननुज्ञात-संपर्का अनभ्युपगतसंयोगा रजनीव प्रतिबंधिकेति शेषः । नानुज्ञातः प्रति-

---

( १ ) B. G. T. om. सो. ( २ ) P. A. add णो. ( ३ ) B. G. T. उपसर्पेताम्. ( ४ ) B. G. T. मालविकां परिव्राजिकां च दृष्ट्वा &c. ( ५ ) B. G. T. repeat. ( ६ ) P. A. add राजा-स्वागतम् इतो निषीदतम् T. add राजा-निषीदतम्; राजनिर्देशात्; B. G. प्रविष्टे. Po. A. om. राजाज्ञया. (७) P. A. अभियोगो भवत्योः ( ८ ) B. G. N, T P. A. संगीदए. ( ९ ) B. G. N. T. P. A. अब्भंदरे. ( १० ) B. G. T. दक्खदरा for पेक्ख कदरा. ( ११ ) P. A. B. G. T. सहाइणी.

**उभे**—( मालविकां दृष्ट्वा । ) अह्मो भट्टदारिआ । ( प्रणिपत्य तया सह बाष्पं विकिरतः । ) ( क )

( सर्वे सविस्मयमवलोकयन्ति । )

**राजा**—के वै भवत्यौ । का वेयम् ।

**उभे**— देव अह्माणं भट्टदारिआ एसा । ( ख )

**राजा**—कथमिव ।

**उभे**—सुणादु भट्टा । जो सो भट्टिणा विअअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइदो कुमालो माहवसेणो णाम तस्स इअं कणीअसी भइणी मालविआ णाम । ( ग )

**देवी**—कहं राअदारिआ इअं । चन्दणं क्खु मए पादुओवओएण दूसिदं । ( घ )

**राजा**—अथात्रभवती कथमित्थंभूता ।

---

( क ) अहो भर्तृदारिका ।

( ख ) देवअस्माकं भर्तृदारिकैषा ।

( ग ) शृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम तस्येयं कनीयसी भगिनी मालविका नाम ।

( घ ) कथं राजदारिकेयम् । चन्दनं खलु मया पादुकोपयोगेन दूषितं ।

---

षिद्धः संपर्को यस्याः । पक्षे मुनिशापात् प्रतिषिद्धः संपर्को यस्यामिति विग्रह.

---

( १ ) Po. A. B G. T. भट्टि°. (२) B. G. T. जेदु जेदु भट्टिदारिआ ( इति प्रणिपत्य...विसृजतः ); N. ( इति प्रणम्य ) जेदु जेदु भट्टिदारिआ । ( तया-सह &c. ); Po विसृजतः. ( ३ ) Po. A. om. ( ४ ) Po. A. च for वा; Pn. केयंवा. ( ५ ) B. G. T..om; N. भट्टा ( ६ ) P. इअं; B. G. T. om. ( ७ ) B. G. T. बहिणिआ. ( ८ ) P. A. अह्मो. ( ९ ) B. G. T. अवदेसेण; P. A. परिभोएण.

**माल०**—( निःश्वस्य । आत्मगतम् । ) विहिंणिओएण[1] । ( क )

**द्वितीया**—सुणादु भट्टा[2] । दाआदवसंगदे अह्माणं[3] भट्टदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अह्मारिसं परिअणं उज्झिअ गूढं आणीदा[4] एसा । ( ख )

**राजा**—श्रुतपूर्वं मयैतत्[5] । ततस्ततः ।

**द्वितीया**—भट्टा[6] अदोवरं ण आणीमो[7] । ( ग )

**परिव्रा०**—अतः परमहं[8] मन्दभागिनी[9] कथयिष्यामि ।

**उभे**—भट्टदारिएँ[10] अज्जै[11]कोसिईए विअ सरसंजोओ[12] । ( घ )

**माल०**—णं सा एव्व । ( च )

**उभे**—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवादि वन्दामो[13] । ( छ )

---

( क ) विधिनियोगेन ।

( ख ) शृणोतु भर्ता । दायादवशं गतेऽस्माकं भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा ।

( ग ) भर्तः अतः परं न जानीमः ।

( घ ) भर्तृदारिके आर्यकौशिक्या इव स्वरसंयोगः ।

( च ) ननु सैव ।

( छ ) यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति वन्दावहे ।

---

( १ ) P. A. विहिणो. ( २ ) N. om. सुणादु भट्टा, and read भट्टदाआद &c. ( ३ ) B. G. T. N. om. ( ४ ) P. A. अवणीदा. ( ५ ) Pn. एतावत् and om. ततस्ततः. ( ६ ) P. A. एत्तिअं एव्व for भट्टा. ( ७ ) B. G. T. जाणामि. ( ८ ) N. ततः परं and om. अहं. ( ९ ) Pn. °भाग्या. (१०) N. om. (११) Po A. अज्जाए कोसिकीए. (१२) P add सुणीअदि; B. G. T. take णं सा एव्व । here and read below. मालविका अह किं. ( १३ ) B. G. T. णमो दे.

**परिव्रा०**—स्वस्ति भवतीभ्याम्[1]।

**राजा**—कथमाप्तवर्गोऽयं भगवत्योः।

**परिव्रा०**—एवमेतत्।

**विदू०**—तेण हि कहेदु भअवदी अत्तहोदीए उत्तन्तविसेसं[2]। (क)

**परिव्रा०**—(सवैक्लव्यम्[3]।) श्रूयतां तावत्। माधवसेनसचिवं सुमतिं[4] ममाग्रजमवगच्छ।

**राजा**—उपलक्षितम्[5]। ततस्ततः।

**परिव्रा०**—स[6] इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं[7] विदिशागामिनमनुप्रविष्टः।

**राजा**—ततस्ततः।

**परिव्रा०**—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्जनः[8]।

**राजा**—ततस्ततः[11]।

**परिव्रा०**—ततश्च[12]।

**तूणीरपट्ट[13]परिणद्ध[14]भुजान्तराल-**
**मापार्ष्णि[15]लम्बिशिखिबर्ह[16]कलापशोभि[17]।**

---

(च) तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तविशेषम्।

---

भेदः। अतः परं न जानीमः। **तूणीरपट्टेत्यादि**। ( तूणीरपट्टेन परिणद्धं

---

(१) P. A. भवत्याः. (२) B. G. N. T. वुत्तन्तं ( B. G. T. add णाव असेसं. ) (३) B. G. T. ( सविक्लबम ); (४) B. G. T. Interchange. (५) B. G. T. उपलक्षित:; P. A. उपलब्धम. (६) B. G. om. (७) N. सार्धं. (८) P. वैदिश. (९) B. G. गन्तव्यमन्तरेण; P. A. अटव्यन्ते. (१०) P. A. add अध्वश्रमार्तो विश्रमितुं; T. इव विश्रमितुमारब्धः (११) N. B. G. किंचान्यत् ; किंनुभूयः. (१२) T. add किंचान्यत. N. om. च. (१३) P. °बन्ध.° (१४) N. °परिबद्ध.° (१५) P. °कर्ण.° (१६) P. N. पिच्छ. (१७) P. A. N. T. °धारि.

**कोदण्डपाणि निनदत्प्रतिरोधकाना-**
**मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥**

( मालविका भयं रूपयति । )

**विदू०**—भोदि[2] मा भआहि । अदिक्कन्तं क्खु भअवदी[3] कहेदि । (क)

**राजा**—ततस्ततः ।

**परिव्रा०**—ततो मुहूर्तं बद्धयुद्धास्ते पराङ्मुखीकृता[4]: सार्थवाहयोद्धार-स्तस्करैः[5] ।

**राजा**—भगवति[6] अतःपरं[7]मिदानीं[8] कष्टं श्रोतव्यम् ।

**परिव्रा०**—ततः स मत्सोदर्यः[9] ।

**इमां परीप्सुर्दुर्जाते[10] पराभिभवकातराम् ।**
**भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥**

**प्रथमा**—[11]हंहो गदो तादो मरणं ( ख )

---

( क ) भवति मा बिभेहि । अतिक्रान्तं खलु भगवती कथयति ।

( ख ) अहो गतस्तातोमरणम् ।

---

भुजान्तरालं यस्य । आपार्ष्णि पार्ष्णिपर्यंतं लम्बिनं दोलायमानं शिखिनो मयूरस्य पिच्छानां बर्हाणां कलापेन शोभि । कोदण्डपाणि धनुष्पाणि प्रतिरोधकानां दस्युविशेषाणामनीकं सैन्यं आपातदुष्प्रसहं प्रबलसंयोग-मात्रेण अत्यंतदुःसहं यथा तथा निनदत् शब्दायमानं सन् आविर-भूत् ) । भवति मा बिभेहि । अतिक्रान्तं पुनरत्रभवती कथयति । **इमा-मित्यादि** । दुर्जाते आपदि पराभिभवकातराम् परेषां शत्रूणामभिभवं

---

( १ ) N. विनदत्. ( २ ) Po. A. om. ( ३ ) B. G. T. अत्तहोदी; N. तत्तहोदी. ( ४ ) T. (alternative) मुग्धयोद्धार: T. B. G. N. बध्दायुधाः ( ५ ) B. G. N. T. भूताः, P. A. take तस्करैः here after this. ( ६ ) N. हन्त; T. add हन्त. ( ७ ) B. G. T. अतः; N. इतःपरं. ( ८ ) N. कष्टतरं; कष्टतरमिदानीम्. ( ९ ) N. सुमतिः. ( १० ) Po. A. B. G T. दुर्जातेः. ( ११ ) N. Pn. हंहो ( N. अहो ) हदो सुमदी; B. G. T. आ! हा हदो सुमदी णं; हदो तादो अज्जसुमदी अम्हाणं.

**द्वितीया**—अदो[1] क्खु भट्टिदारिआए इअं समवत्था संवुत्ता । ( क )

( परिव्राजिका बाष्पं विकिरति । )

**राजा**—भगवति[3] तनुभृताम्[4]ईदृशी लोकयात्रा । न शोच्यस्[5]तत्रभवान्सफलीकृतभर्तृपिण्डैः[6] । ततः[7] ।

**परिव्रा०**—ततोऽहं मोहमुपगता यावत्संज्ञाम्[8]उपलभे तावदियं दुर्लभदर्शना संवृत्ता[9] ।

**राजा**—महत्खलु कृच्छ्रम्[10]अनुभूतं भगवत्या[11] ।

**परिव्रा०**—ततो भ्रातुः[12] शरीरमग्निसात्कृत्वा पुनर्नवीकृत[13]वैधव्यदुःखया मया त्वदीयं[14] देशमवतीर्येमे काषाये गृहीते ।

**राजा**—युक्तः सज्जनस्यैषा पन्थाः । ततस्ततः[15] ।

**परिव्रा०**—ततः[16] इयमप्याटविकेभ्यो वीरसेनं वीरसेनाद्देवीं गता देवीगृहे लब्धप्रवेशया मया पुन[17] दृष्टा । इत्येतदवसानं कथायाः ।

---

( क ) अतः खलु भर्तृदारिकाया इयं समवस्था संवृत्ता ।

---

आक्रमणं तस्मात्कातरां, दुःखितामिमां मालविकां परीप्सुः पर्याप्तुं परित्रातुमिच्छुः । ' आप्ज्ञप्यृधामीत् ' इतीत्वम् । अत्र ' लोपोऽभ्यासस्य ' इत्यभ्यासलोपः ' पर्याप्तिः स्यात्परित्राणं हस्तधारणमित्यपि ' इत्यमरः । भर्तृप्रियः स्वामिभक्तः । प्रियैरिष्टैरसुभिः प्राणैर्भर्तुरानृण्यमनृणत्वं गतः प्राप्तः

---

( १ ) B. G. T. तदो. ( २ ) N. विसृजति; B. G. T. सृजति. ( ३ ) Po. A. om. (४) B. G. N. T. °त्यजा. (५ ) Po. A. शोचितव्यः; N. शोच्यं. ( ६ ) भर्तृप्रतिज्ञः; B. G. T. add तपस्वी. ( ७ ) P. A. B. G. T. om.; N. ततस्ततः ( ८ ) N. लभे; T. प्रतिलभे; B. G. प्रतिलेभे. ( ९ ) N. संप्रवृत्ता. ( १० ) Po. कष्टं. ( ११ ) B. G. T. तत्रभवत्या; ( १२ ) Po. A. भ्रातृ° ( १३ ) N. °भूत, B. G. T. om. वैधव्य. ( १४ N. त्वदीयदेशं. ( १५ ) B. G. T. om. ( १६ ) B. G. N. T. सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च ( B. G. T. om. च ) देवीं गता । देवीगृहे लब्धप्रवेशया (B. G. T. add मया) दृष्टेत्येतदवसानं कथायाः. (१७) N. om.

**माल०**—( आत्मगतम् । ) किं णु खु संपदं भट्टा भणादि । ( क )

**राजा**—अहो परिभवोपहारिणो[1] विनिपाताः । कुतः ।

**प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।**
**स्नानीयवस्त्रक्रियया पत्त्रोर्णं[2] वोपयुज्यते ॥ १२ ॥**

**देवी**—भअवदि तुए अभिजणवदिं मालविअं अणाचक्खन्तीए असंपदं किदम् । ( ख )

**परिव्रा०**—शान्तं पापं शान्तं पापम्[3] । कारणेन[4] खलु मया नैभृत्य[5]मवलम्बितम् ।

**देवी**—किं विअ तं[6] कारणम्[7] । ( ग )

**परिव्रा०**—'इयं पितरि[8] जीवति[9] केनापि लोकयात्रागतेन सिद्धादेशेन[10] साधुना मत्समक्षमादिष्टा[11] संवत्सरमात्रं[12] प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तदवश्यं[13] भाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया[14] साधु कृतमिति पश्यामि ।

( क ) किं नु खलु सांप्रतं भर्ता भणति ।
(ख) भगवति त्वयाभिजनवतीं मालविकामनाचक्षमाणयासांप्रतं कृतम् ।
( ग ) किमिव तत्कारणम् ।

अहो हतः सुमतिः । **प्रेष्यभावेनेत्यादि** । देवीशब्दक्षमा देवीशब्दयोग्या

( १ ) B. G. परिभवप्रहारिणो. ( २ ) A. पत्त्रोर्णो. ( ३ ) B. G. N. T. om. one शान्तं पापम्. ( ४ ) N. केन च कारणेन. ( ५ ) B. G. N. T. नैर्गुण्यम्; नैर्भृत्यम्. ( ६ ) Po. A. अत. Pu (एत्थ). किं वा कारणम्. ( ७ ) P. A. add राजा—यदि वक्तव्यं तत्कथ्यतां. ( ८ ) Pu. add श्रूयतां. ( ९ ) परिदीप्यन्ती for पितरि जीवति. ( १० ) B. G. N. T. दैव°. (११) B. G. T. शिवादेशकेन; N. सिध्दादेशकेन. ( १२ ) B. G. T. व्यादिष्टा; N. समादिष्टा. ( १३ ) B, G. N. T. take इयं here. ( १४ ) N. तदेवं भाविनं; B. G. T. om. from this upto विज्ञापयति in कंचुकी's speech and read his remaining speech along with this. ( १५ ) N. परिणतं. ( ११ ) P. A. add तत्.

**राजा**—युक्तोपेक्षा।

**कञ्चुकी**—देव कथान्तरेणान्तरितम्। अमात्यो विज्ञापयति। विदर्भगतमनुष्ठेयमवधारितमस्माभिः। देवस्य तावदभिप्रेतं श्रोतुमिच्छामीति।

**राजा**—मौद्गल्य तत्रभवतोर्भ्रात्रोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि।

**तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे।**
**नक्तं दिवं विभज्योभौ शीतोष्णकिरणाविव॥ १३॥**

**कञ्चुकी**—देव एवममात्यपरिषदे निवेदयामि।

( राजाङ्गुल्यानुमन्यते। )

( निष्क्रान्तः कञ्चुकी। )

**प्रथमा**—( जनान्तिकम्। ) भट्टदारिए दिट्ठिआ भट्टदारओ अद्धरज्जे पडिट्ठं गमिस्सदि। ( क )

---

( क ) भर्तृदारिके दिष्ट्या भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमिष्यति।

---

सतीयं मालविका प्रेष्यभावेन परिचारकत्वेन उपयुज्यते किल। पत्तोर्णं वा धौतकौशेयमिव। वेत्युपमायाम् 'उपमायां विकल्पे वा' इत्यमरसिंहः। स्नानीयवस्त्रक्रियया स्नानीयवस्त्रकरणेन॥ भगवति त्वयाभिजनवतीं मालविकामनाचक्षाणयासांप्रतमयुक्तं कृतम्। **तौ पृथगित्यादि**। तौ यज्ञसेनमाधवसेनौ पृथक्पार्थक्येनोत्तरदक्षिणे वरदाकूले। वरदा नाम तत्रत्या नदी तस्याः कूले उभे तीरे शिष्टां रक्षताम्। भर्तृदारिके दिष्ट्या भर्तृदार-

---

( १ ) N. प्रतीक्षा. ( २ ) P. A. प्रविश्य कंचुकी &c.. अंतरितमिदममात्यो &c. ( ३ ) B. G. T. उपस्थितमभूत्। ( अवधारितमस्माभिः ); N. अनुष्ठितमभूत् and om. अस्माभिः. ( ४ ) Po. A. अभिमतं; B. G. N. T. अभिप्रायं. ( ५ ) B. G. om. ( ६ ) B. G. N. om. ( ७ ) Pn. द्वयोराज्यं स्थापयितुमिच्छामि. ( ८ ) B. G. T. दिनं. ( ९ ) B. G. T. Pn. विज्ञापयामि. ( १० ) N. add मन्त्रिणा. ( ११ ) N. गमयिष्यते.

**माल०**—एदं दाव बहुमन्तव्वं[1] जं जीविदसंसआदो मुत्तो । ( क )

( पुनः[2] प्रविश्य । )

**कञ्चुकी**—विजयतां देवः । देव[3] अमात्यो विज्ञापयति । [4]कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येतदेव दर्शनम्[5] । कुतः[6] ।

**द्विधा विभक्तां श्रियमुद्वहन्तौ**
**धुरं रथाश्वाविव संग्रहीतुः ।**
**तौ स्थास्यतस्ते नृपतीं[8] निदेशे**
**परस्परावग्रहनिर्विकारौ[9] ॥ १४ ॥**

**राजा**—तेन हि मन्त्रिपरिषदं ब्रूहि । सेनापतये[10] वीरसेनाय लि[11]ख्यतामेवं क्रियतामिति ।

**कञ्चुकी**—यदाज्ञापयति देवः[12] । ( इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य[13] । ) अनुष्ठिता प्रभोराज्ञा । अयं पुन[14]रिदानीं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सप्रा[15]भृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः ।

( क ) एतत्तावद्बहु मन्तव्यम् यज्जीवितसंशयान्मुक्तः ।

---

कोऽर्धराज्ये प्रतिष्ठां गमयिष्यते । **द्विधा विभक्तामित्यादि** । ( उक्तप्रकारेण द्विधाविभक्तां संगृहीतुः संयन्तुः धुरं रथाश्वाविव श्रियं वहन्तौ धारयन्तौ तौ यज्ञसेनमाधवसेनौ नृपती परस्परावग्रहे युद्धादिना आक्रमणे

---

( १ ) Pn. एतिअ. ( २ ) B. G. N. T. मणिदव्वं. ( ३ ) P. A. om. पुनः ( ४ ) P. A. om. and B. G. T. देवस्य after अमात्यो for देव. ( ५ ) Pn. add अहो. ( ६ ) Pn. एवमेवदर्शनं. ( ७ ) B. G. A. T. Po. om. ( ८ ) T. नृपतेः; B. G. N. नृपते. ( ९ ) N. उपग्रह. ( १० ) B. G. N. T. सेनान्ये. ( ११ ) N. T. लेख्यतां B. G. कथ्यतां. ( १२ ) Po. A. तथा for the sentenc. ( १३ ) B. G. N. प्रविष्टः. ( १४ ) B. G. N. T. om. पुनरिदानीं. ( १५ ) B. G. N. T. सोत्तरीयप्राभृतक &c.

( राजा सहसोत्थाय सोपचारं परिगृह्य प्राभृतकं परिजनायार्पयति।
लेखं च नाटयेनोद्वेष्टयति । )

**देवी**---( आत्मगतम् । ) अह्महे तदोमुहं एव्व णो हिअअं । सुणिस्सं दाव गुरुअणस्से कुसलाणन्तरं वसुमित्तस्स वुत्तन्तं । अहिआरे क्खु मे पुत्तओ सेणावदिणा णिउत्तो । ( क )

**राजा**---( उपविश्य वाचयति । ) स्वस्ति । यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्य अनुदर्शयति । विदितमस्तु । योऽसौ राजसूययज्ञे दीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य संवत्सरोपावर्तनीयो निरर्गलस्तुरगो विसृष्टः स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः । तत उभयोः सेनयोर्महानासीत्संमर्दः ।

---

( क ) अह्महे ततोमुखमेव नो हृदयम् । श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम् । अधिकारे खलु मे पुत्रकः सेनापतिना नियुक्तः ।

---

निर्विकारौ द्वेषरहितौ, संतौ ते तव निर्देशे आज्ञायां स्थास्यतः ) । अह्महे इति हर्षे । अतिभारे खलु पुत्रकः सेनापतिना नियुक्तः । **यज्ञशरणादित्यादि** । अत्र राजयज्ञो नामाश्वमेधः । राजपुत्रशतपरिवृतं राजपुत्राणां

---

( १ ) Po. A. सहसोपसृत्य प्राभृतकं ( A. प्राभृतं ) सोपचारं शिरसि कृत्वा परिजनायार्पयति । लेखं च नाट्येनोद्वेष्टयति; B. G. N. T. उत्थाय प्राभृतकं सोपचारं गृहीत्वा लेखं ( B. G. सलेखं, N. लेखं after सोपचारं ) परि... अर्पयति । परिजनः उद्घाटयति, उद्वेजयति. ( २ ) P. A. B. G. T. गुरुअण. &c. ( ३ ) B. G. T. अदिभारे, N. अदिघोरे. ( ४ ) B. G. N. T. om. मे. ( ५ ) B. G. T. सेणवदी. ( ६ ) N. add लेखं सोपचारं गृहीत्वा. ( ७ ) N. वैदिशस्तत्रत्यं. ( ८ ) N. add इद. ( ९ ) B. G. N. T. राजयज्ञ.° ( १० ) B. G. T. संवत्सराय निवर्तनीयो; N. संवत्सरोपान्तनियमो. ( ११ ) B, G. T. तुरंगमो, A. तुरंगो. ( १२ ) B. G. T. विसर्जितः ( १३ ) B. G. T. दक्षिणे रोधसि. ( १४ ) B. G. N, T. यवनेन.

( देवी विषादं नाटयति । )

**राजा**—कथमीदृशं संवृत्तम् । ( शेषं[1] पुनर्वाचयति । )

**ततः परान्पराजित्य वसुमित्रेण धन्विना ।**

**प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १५ ॥**

**देवी**—दाणिं आस्ससदि मे हिअअं[3] । ( क )

**राजा**—( लेखशेषं वाचयति । ) सोऽहमिदानीमंशुमतेव[5] सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं[6] विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति[7] ।

**राजा**—अनुगृहीतोऽस्मि ।

**परिव्रा०**—दिष्ट्या पुत्रविजयेन दम्पती वर्धेते[8] । ( देवीं विलोक्य )[9] ।

**भर्त्रासि वीरपत्नीनां श्लाघ्यानां[10] स्थापिता धुरि ।**

**वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः ॥ १६ ॥**

---

( क ) इदानीमाश्वसिति मे हृदयम् ।

---

शतेन परिवेष्टितम् । तथा च श्रुतावश्वमेधप्रकरणे ' शतेन राजपुत्रैः सह ' इति ॥ **ततः पर।नित्या।दि** । ( ह्रियमाणः परैरिति शेषः । मे मम वाजिराजः अश्वश्रेष्ठः अश्वमेधीयत्वलक्षणाक्रान्तत्वात् श्रेष्ठत्वं । प्रसह्य बलेन निवर्तितः प्रत्याहृतः इत्यर्थः ) । अनेनाश्वस्तं मे हृदयम् । **भर्त्रा।सीत्या।दि** । ( भर्त्रा स्वामिना अग्निमित्रेण वीरपत्नीनां वीरः पतिर्यासां तासां श्लाघ्यानां स्त्रीणां धुर्यग्रे स्थापितासि । तनयाद्धेतोः वीरसूरिति वीरमातेत्ययं शब्दः त्वामुपस्थितः प्राप्तः )

---

( १ ) P. निरूपयति, A. रूपयति. ( २ ) B. G. T. om. शेषं. ( ३ ) B. G. N. T. आस्सासिदं मे हिअअं. ( ४ ) N. शेषं पुनर् &c. ( ५ ) N. °अंशुमता सगरपुत्रेणेव &c. ( ६ ) P. A. कालहीनं. ( ७ ) P. A. संदर्शनाय. ( ८ ) N. वर्तेते. ( ९ ) B. G. N. T. om. ( १० ) P. A. श्लाघ्यायां.

**विदू०**—होदि परितुट्ठेह्मि जं पिदरं अणुगदो वच्छो । ( क )

**परिव्रा०**—कलभेन यूथपतिरनुकृतः ।

**कञ्चुकी**—देव अयं कुमारः—

> **नैतावता वीरविजृम्भितेन**
> **चित्तस्य नो विस्मयमादधाति ।**
> **यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-**
> **र्वह्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥**

**राजा**—मौद्गल्य यज्ञसेनश्यालमुररीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**देवी**—जयसेणे गच्छ । इरावदिप्पमुहाणं अन्तेउराणं पुत्तस्स वुत्तन्तं णिवेदेहि । ( ख )

---

( क ) भवति परितुष्टोऽस्मि । यत्पितरमनुगतो वत्सः ।

( ख ) जयसेने गच्छ । इरावतीप्रमुखेभ्योऽन्तःपुरेभ्यः पुत्रस्य वृत्तान्तं निवेदय ।

---

। भगवति परितुष्टोस्मि । यत्पितरमनुजातो वत्सः । **नैतावतेति** । ( एतावता शत्रुपराजयपूर्वकाश्वाहरणरूपेण वीरविजृंभितेन शूरचेष्टितेन नोस्माकं चित्तस्य विस्मयं न आदधाति । अविस्मयाधानकत्वे हेतुमाह । अप्रधृष्यः

---

( १ ) B. G. T. धारिणी-भोदि &c. and om. मे. N. देवी-भअवदि परितुट्ठह्मि अणुजादो मे वच्छओ. ( २ ) B. G. N. T. P. A. राजा-मौगल्य ( B. N. G. T. मम ) कलभेन ( P. A. खलु ) यूथपतिरनुकृतः ( ३ ) B. G. T. यूथपतेः ( ४ ) B. G. T. P. A. om. एष अयं कुमारः ( ५ ) पुत्रस्य. ( ६ ) B. G. N. T. अग्नेः ( ७ ) B G. N. T. करीकृत्य. ( ८ ) N. मोच्यंतां. ( ९ ) P. A. तथा for यदा...देवः ( १० ) B. G. T. मेलक for इरावदि ( ११ ) P. A. add पिअसख.

( प्रतीहारी तथेति[1] प्रस्थिता । )

देवी—एहि दाव । ( क )

प्रती०—( प्रतिनिवृत्य[2] । ) इअं ह्मि । ( ख )

देवी—( जनान्तिकम् । ) जं मए असोअदोहलणिओए मालविआए[3] पइण्णादं[4] तं[5] से अहिजणं अ णिवेदिअ मह वअणेण इरावदिं अणुणेहि । तुए अहं सच्चादो ण भ्रंसइदव्वेत्ति । ( ग )

प्रती०—जं देवी आणवेदि । ( इति निष्क्रम्य पुनः प्रविश्य[6] । ) भट्टिणि पुत्तविअअणिमित्तेण परितोसेण अन्तेउराणं[9] आहरणाणं मञ्जूस ह्मि संवुत्ता । ( घ )

देवी—किं एत्थ[7] अच्चरिअं । णं[8] साहारणो ताणं[8] मह अ अअं अब्भुदओ । ( च )

---

( क ) एहि तावत् ।

( ख ) इयमस्मि ।

( ग ) यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम् तदस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय । त्वयाहं सत्यान्न भ्रंशयितव्येति ।

( घ ) यद्देव्याज्ञापयति । भट्टिनि पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता ।

( च ) किमत्राश्चर्यम् । साधारणः खलु तासां मम चायमभ्युदयः ।

---

अन्यैर्वर्षयितुमशक्यो यस्य वीरस्य अपान्दग्धुरम्भेर्वडवानलस्येव ऊरुजन्मा ऊरुतो जन्म यस्य स और्वऋषिः । अथ च उरु श्रेष्ठं जन्म यस्य

---

(१) B. G. N. T. om. तथेति; P. A. प्रति–त्तह । ( इति &c. ) (२) N. परिसृत्य; A. उपसृत्य. ( ३ ) P. A. Interchange. ( ४ ) P. A. add च and read प for the अ in our text. ( ५ ) P. A. add परि; N add वि. ( ६ ) B. G. T. add च. ( ७ ) एवं किं for किं एत्थ; B. G. T. अलं । किं &c. ( ८ ) N. साहारणो क्खु; B. G. T. साहारणो ण अब्भुदओ. ( ९ ) B. G. T. अन्तेउराणं.

**प्रती०**—( जनान्तिकम् । ) भट्टिणि इरावदी उण विण्णवेदि । सरिसं क्खु पहवन्दीए दे वअणं पुढमसंकप्पिदं ण जुज्जइ अण्णहा कादुं त्ति । ( क )

**देवी**—भअवदि तुए अणुण्णादा इच्छामि अज्जसुमदिणा पुढमसंकप्पिदं अज्जउत्तस्स मालविअं पडिवादेदुं । ( ख )

**परिव्रा०**—इदानीमपि त्वमेवास्याः प्रभवसि ।

**देवी**—( मालविकां हस्ते गृहीत्वा । ) इमं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडिच्छदु । ( ग )

( राजा सव्रीडं जोषमास्ते । )

**देवी**—( सस्मितम् । ) किं अवधीरेदि मं अज्जउत्तो । ( घ )

---

( क ) भट्टिनि इरावती पुनर्विज्ञापयति । सदृशं खलु प्रभवन्त्यास्तव वचनं प्रथमसंकल्पितं न युज्यतेऽन्यथा कर्तुमिति ।

( ख ) भगवति त्वयानुज्ञातेच्छाम्यार्यसुमतिना प्रथमसंकल्पितामार्यपुत्राय मालविकां प्रतिपादयितुम् ।

( ग ) इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु ।

( घ ) किमवधीरयतिमामार्यपुत्रः ।

---

तथाभूतस्त्वं च प्रभव उत्पत्तिकारणं उत्पत्तिस्थानं । एतादृशोत्पत्तिकस्य वीरचेष्टितं उचितमेवेति न विस्मयाधानकत्वं इति भावः । यज्ञसेनशालमुरीकृत्य गृहीत्वा तेन सहेत्यर्थः । तस्याभिनवबद्धत्वात् पृथगुक्तिः ) । अत्र किमाश्चर्यम् । साधारणोऽन्तःपुराणां मम चायमभ्युदयः । भट्टिनि इरावती

---

( १ ) P. A. om. ( २ ) P. A. G. T. om. ( ३ ) N. देवीए पहवन्तीए । तुह वअणं संकप्पिदेण &c; B. G. T. क्खु पहुवीए पहवन्तीए तव वअणं । संकप्पिदेण &c. Po. A. क्खु देवी विण्णवेदि पुढमं संकप्पिदं &c; ( ४ ) Po. A. B. G. T. अणुमदं; अणुमदा. ( ५ ) B. G. T. किं. (५) B. G. T. om. एव. (६) P. A. add मालविअं. ( ७ ) B. G. N. T. व्रीडां नाटयति (८) P. A. add तं. (९) B. G. N. T. om.

**विदू०**—भोदि एसो लोअव्ववहारो । सव्वो णववरो लज्जादुरो होदि । ( क )

( राजा विदूषकमवेक्षते । )

**विदू०**—अहवा देवीए पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि । ( ख )

**देवी**—एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो । किं पुणरुत्तेण । ( ग )

**परिव्रा०**—मा मैवम् ।

---

( क ) भवति एष लोकव्यवहारः । सर्वो नववरो लज्जातुरो भवति ।

( ख ) अथवा देव्या प्रणयविशेषं दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति ।

( ग ) एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः । किं पुनरुक्तेन ।

---

विज्ञापयति । सदृशं खलु प्रभवन्त्यास्तव वचनं प्रथमसंकल्पितं न युज्यतेऽन्यथाकर्तुमिति । इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं मालविकां प्रतीच्छतु । अत्र प्रीत्युत्पादनात्प्रसादो नाम सन्ध्यङ्गमुक्तं भवति । भवति एष लोकव्यवहारः । सर्वोऽपि नववरो लज्जातुरो भवतीति । अथवा देव्या प्रणयविशेषं दत्तदेवीशब्दां मालविकां तत्रभवान्प्रतिग्रहीतुमिच्छति ।

---

( १ ) T. अत्थि क्खु लोअप्पवादो सव्वो जणो णववरो लज्जदुरो होदित्ति; B. G. एसो लोअघणवग्घरो लज्जउलोहोदित्ति; P. A. एव्वं लोअप्पवादो &c. ( २ ) P. A. add वि, P. A. लज्जालुओ, ( ३ ) G. T. add त्ति. ( ४ ) N. अपेक्षते. ( ५ ) add देवी–एव्वं विअ होदि एसो लोअप्पवादो सव्वो णववरो लज्जादुरो होदित्ति । ( ६ ) B. G. N. T. अह; A. इमं देवीए दिण्णदेवीसद्दं; Po. अहवा इमं देवीए पणअ &c. ( ७ ) B. G. N. T. read एव्वं किदप्पण° &c. ( ८ ) B. G. T. add अ, ( ९ ) B. G. T. एव्व after दिण्णो.

**अप्याकरसमुत्पन्ना मणिजातिरसंस्कृता ।**
**जातरूपेण कल्याणि न हि[2] संयोगमर्हति ॥ १८ ॥**

**देवी**---( स्मृत्वा[3] । ) मरिसेदु भअवदी । अब्भुदअकहाए मए[4] ण लक्खिदं । जअसेणे गच्छ दाव । कोसेअपत्तोण्णं[5] उवणेहि । ( क )

**प्रती०**---जं भट्टिणी[6] आणवेदि । ( इति निष्क्रम्य[7] पत्त्रोर्णं गृहीत्वा प्रविश्य । ) देवि[8] एदम्[9][10] । ( ख )

**देवी**---( मालविकामवगुण्ठनवतीं कृत्वा । ) अज्जउत्तो[11] दाणिं[12] इमं[13] पडिच्छदु । ( ग )

**राजा**---देवि[14] त्वच्छासनादप्रत्युत्तरा वयम् ।

---

( क ) मर्षयतु भगवती । अभ्युदयकथायां मया न लक्षितम् । जयसेने गच्छ तावत् । कौशेयपत्त्रोर्णमुपनय ।

( ख ) यद्भट्टिनी आज्ञापयति । देवि एतत् ।

( ग ) आर्यपुत्र इदानीमिमां प्रतीच्छतु ।

---

**अप्याकरेत्यादि** । स्पष्टोऽर्थः । अत्र लब्धार्थस्य स्थिरीकरणात्कृतिर्नाम संध्यङ्गमुक्तं भवति । मर्षयतु भगवती । अभ्युदयकथयोचितं न लक्षितम् । जयसेने गच्छ तावत् । कौशेयपत्त्रोर्णयुगलमुपनय । हन्त हर्षे । प्रतिगृ-

---

( १ ) N. अप्याकर...त्पन्नो मणिजातिपुरस्कृतः, B. G. T. अस्माकमुत्सव मणिर्मणिजातिपुरस्कृतः ( २ ) B. G. N. T. नहि ( ३ ) P. A. om. ( ४ ) N. उइदं for मए; T. पढमं अवगुंठिदं; B. G. पढमं ण &c. ( ५ ) N. पत्ताण्णजुअलं; T. पत्तोणंजुअलं, B. G. कोसेअं; ( ६ ) Po. A. तह for the sentence; N. देवी for भट्टिणी ( ७ ) B. G. N. T. A. निष्क्रान्ता. ( ८ ) N. add पुनः ( ९ ) A. देवि इयं लि. ( १० ) Pn. add तं. ( ११ ) Pn. अवगुंठ्य. ( १२ ) P. A. interchange. ( १३ ) B. G. अज्जउत्त इअं पडिच्छिआ; T. अज्जउत्त इअं पडिच्छीअदु; P. A. om. इमं. ( १४ ) B. G. N. T. त्वच्छासनात ( N. प्रदत्ता एव, B. G. T. प्रत्यनुरक्ता ) वयं । ( अपवार्य ) हन्त ( N. प्रतिगृहीता; B. G. T. प्रतिगृहीतं ).

अवसितो दर्शनार्थः ।

उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति ।

नास्तिमद्वचनावसरोऽत्र ।

विपणिकन्दुरिव मे उदराभ्यंतरं दह्यते ।

गृहीतक्षणोऽस्मि ।

भवानपि शूनोपरिचरो विहंगम इव अत्यातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे ।

शिष्यागुणविशेषेणोन्नमितो गणदासः ।

केवलं देव्याश्चित्तं रक्षन् प्रभुत्वं न दर्शयति ।

सा तपस्विनी देव्या अधिकतरं रक्ष्यमाणा नागरक्षितो मणिरिव न सुखं समासादयितव्या ।

उचितः प्रणयो वरं विहन्तुम् ।

उपचारविधिर्मनस्विनीनां न तु पूर्वाभ्यधिकोऽपि भावशून्यः ।

एतत्सीधुपानोद्वेजितस्य मत्स्यंडिकोपस्थिता ।

पूर्वस्मादवस्थांतरमारूढा तत्रभवती ।

तत्त्वावबोधैकरसो न तर्कः ।

त्वं देव्या योग्यतया नियुक्ता ।

अथवा एतन्मे मृत्युमंडनं भविष्यति ।

प्रथमामिव पल्लवप्रसूतिं हरदग्धस्य मनोभुवद्रुमस्य ।

परिगृहीतं सिद्धिदर्शिनो ब्राह्मणस्य वचः ।

प्रथमं लोकवाद एव । अद्य सत्यः संवृत्तः ।

संकीर्तनाशंसिना स्नेहेनालम् ।

अलं सेवया । मध्यस्थतां परिगृह्य भण ।

अभूमिरियं मालविकायाः ।

महती खल्वस्याः संभावना ।

अत्राहं भर्तुः शिष्यास्मि ।

त्वरय तावदेनां गुरुदक्षिणायै ।

हन्त सिद्धं मे दौत्यम् ।

केवलं मुखमारुतो लंभयितव्यः ।

गुणेष्वभिनिवेशिनो भर्तुरपि ।

प्रथमं भणितमिव हताशाया उत्तरम् ।

अनुरागोऽनुरागेण प्रत्येष्टव्य इति सुजनवाक्यं प्रमाणीकुरु ।

किमात्मनश्छंदेन मंत्रयसे ।

भर्तुः खल्वेतानि प्रणयमृदूनि बिंबांतरितान्यक्षराणि ।

मुग्धे भ्रमरसंबाधो भविष्यतीति वसंतावतारसर्वस्वं किं न चूतप्रसवोऽवतंसयितव्यः ।

त्वं तावद्दुर्जाते ममात्यंतसहाया भव ।

कारितमेव बकुलावलिकया एतत्पदं मालविकायाः ।

निर्विकारस्याप्युत्सुकत्वजनक उपदेशः ।

गृहीतार्थानंतरं चिंतयिष्यामि ।

पर्याप्तमेतावता कामिनाम् ।

एतस्मिन्नतिक्रमे परवतीयम् ।

नवनीतहृदय आर्यपुत्रः ।

धृतिपुष्पमयमपि जनो वध्नाति न तादृशं चिरात् प्रभृति ।

नन्वशोकः कुसुमं दर्शयति । अयं पुनः पुष्प्यति फलति च ।

जंघा बलमेव ।

न मया विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति ।

मा तावदत्रभवत्यत्रभवतो दाक्षिण्यस्योपरोधं भणतु । समापत्तिदृष्टेन देव्या परिजनेन संकथापि यद्यपराधः स्थाप्यते ऽत्र त्वमेव प्रमाणम् ।

शठ इति मयि तावदस्तु ते परिचयत्यवधीरणा प्रिये।

नूनमिदानीमनुज्ञातम् ।

न खल्विमौ मालविकायाश्चरणौ यौ ते स्पर्शदोहलं पूरयिष्यतः।

उत्तिष्ठ कृतप्रसादोऽसि ।

दिष्ट्या अस्याविनयस्याप्रसादिता गता ।

यो बिडालगृहीतायाः परभृतिकायाः ।

निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शंकयति ।

मालविकाबकुलावलिके पातालवासं नागकन्यका इव अनुभवतः ।

अलमलमुपचारयंत्रणया ।

दंशच्छेदः पूर्वकर्मेति श्रूयते ।

कार्यसिद्धावाशु प्रतिपत्तिमानय ।

वचनीयान्मुक्तास्मि ।
त्वमपि नियोगमशून्यं कुरु ।
मंदस्यापि मम प्रत्युत्पन्ना मतिरत्र ।
तया राजा किल मोचयतीति अहं संदिष्टोऽस्मि ।
ततो युज्यत इति तया संपादितोऽर्थः
कुंभीलकैः कामुकैश्च परिहरणीया खलु चंद्रिका ।
मुधेदानीं मंजूषेव रत्नभांडं यौवनगर्वं वहसि ।
यदि चिरं कुपितां मन्यसे एष प्रत्यानीयते कोपः ।
अहो सुखस्पर्शता शिलाविशेषस्य ।
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ।
तव खलु बहुमानं वर्धयितुं सहवयस्या निगलबंधने कृता मालविका ।
सर्वकालं एत एव स्वस्तिवायनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते ।
अहं पुनर्जाने यन्मया केतकीकंटकैर्दंशं कृत्वा सर्पस्येव दंशः कृत-स्तन्मे फलितमिति ।
अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ।
दिष्ट्या दूत्याधिकारविषया संपूर्णा ते प्रतिज्ञा ।
भवती पुनरद्यापि प्रसादं न गृह्णाति ।
बंधनभ्रष्टो गृहकपोतश्चिल्लाया मुखे पतितः।
इयमस्य कामतंत्रसचिवस्य नीतिः ।
भवति यदि नीतेरेकमप्यक्षरं पठेयं तदा गायत्रीमपि विस्मरेयम् ।
किंचित्परिवृत्तयौवन इव वसंतः प्रमदवने लक्ष्यते ।
अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।
अस्ति खलु लोकप्रवादः आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति
चंदनं खलु मया पादुकोपयोगेन दूषितम् ।
स्नानीयवस्त्रक्रियया पत्रोर्णं वोपभुज्यते ।
तत्रभवतो भ्रात्रो द्वैराज्यं स्थापयितुमिच्छामि ।
मंत्रिपरिषदोऽप्येवमेव दर्शनम् ।
कलभेन खलु यूथपतिरनुकृतः

पुत्रविजयनिमित्तेन परितोषेणांतः पुराणमाभरणानां मंजूषास्मि संवृत्ता ।
यदुपचारातिक्रमेण तदा भर्तुरपराद्धं तद्भर्तुरनुकूलं न मया आचरितम् ।
मदीयेषु लेखेषु तत्रभवते त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामि ।
अयि विवेकविश्रांतमभिहितम् ।
का वयं भट्टिनीं नियोजयितुम् ।
अनेनांगुलियकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः प्रतिभाति ।
अनेन व्यापारेणासंनिहितापि दृष्टा किल सा भर्त्रा ।
आकृतिविशेषेषु आदरः पदं करोति ।
कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः ।
कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ।
त्रैगुण्योद्भवमत्रलोकचरितं नानारसं दृश्यते ।